

मनोरञ्जनार्थं 'तथा'

उदरोपपीडं हासार्थं पठन्तु !

# मिकी तथा डोनाल्ड

## कॉमिक्स् ! (आंग्ल भाषायाम्)

त्वरया एकां प्रतिकृतिं क्रीणन्तु ।



# चन्दमामा

अगस्त् १९८४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् — रू. २ ००

वार्षिकं ग्राहकशुल्कम् — रू. २४-००

चंदमामा चन्दमामा

"श्रीः"

# भारतम् इदम् अद्वितीयम् ।

अत्र हि विभिन्नाः संस्कृतयः, विभिन्नाः श्रद्धाः, अनेकाः भाषाः उपभाषाः, विविधाः जातयः उपजातयः, विविधानि मतानि च ।

एवम् अगणिताः विभेदाः सन्ति, तथापि सर्वेषाम् आदरास्पदः विषयः एकः अस्ति ।

स च "वयं भारतीयाः" इति भावः । एतं भावं वयं सर्वदा पोषयामः । "भारतम्-एकः महान् देशः" इति अस्माकम् अचला श्रद्धा । अस्य देशस्य तादृशी एका परम्परा अस्ति यत्र अस्माकम् अपि दायभागः अस्ति ।

# चन्दमामा

या समानया परम्परया, अनेकासु भाषासु ।



चाँदमामा CHANDAMAMA चांदोबा

# चन्दमामा

संस्थापकः "चक्रपाणिः"
सञ्चालकः "नागिरेड्डी"

गृहे संस्कृतसम्भाषणेन गृहे संस्कृतवातावरणं निर्मितं भविष्यति । बालाः बालिकाः अपि सम्भाषणं श्रुत्वा शनैः शनैः संस्कृतेन वक्तुं प्रयत्नं करिष्यन्ति । किन्तु गृहे संस्कृत–सम्भाषणसमये एते अंशाः अनुसरणीयाः– "प्रयुक्तानाम् एव पदानां प्रयोगः पुनः पुनः करणीयः । पर्यायपदानां प्रयोगः विशेषेण निवारणीयः, तेन बालाः भ्रान्ताः न भवन्ति । मातृभाषायां स्थितानि संस्कृतपदानि एव प्रयोगे आदरणीयानि । बालानां पुरतः सम्भाषणसमये तत्तत् वस्तु अङ्गुल्या निर्दिश्य पदम् उच्चारयेत् । बालाः गृहसदस्याः वा यदि दोषं करिष्यन्ति तदा ते सर्वथा न भर्त्सनीयाः । सुप्रसन्नेन मनसा यथा ते हतोत्साहाः न भवेयुः तथा दोषाः सूचनीयाः ।

सम्पुटः–१ अगस्त्–८४ सञ्चिका–५

प्रतिकृतिमूल्यम् रू. २.॰ वार्षिकं ग्राहकशुल्कम् रू. २४



# चन्दमामा प्रजल्पति

## राक्षससदृशाः गृहगोधयः कथं नष्टाः ?




प्रायः सार्धषट्कोटिवर्षेभ्यः पूर्वं प्रपञ्चे सर्वत्र व्यापृताः 'डिनोसार्स' नामकाः गृहगोधयः सहसा कथम् अदृश्यतां गताः ? विज्ञानिनः वदन्ति यत् अन्तरिक्षात् आगतेन लघुना ग्रहेण भूमण्डलम् आस्फालितम् । तेन जगत्प्रलये समुत्पन्ने तत्र एते गृहगोधयः समूलं नष्टाः इति ।

## मानवः मृगः च ।

इतिहासज्ञाः कथयन्ति यत् ८ सहस्रवर्षेभ्यःपूर्वम् एव तिर्यग्जन्तून् मानवः स्वानुकूलं यथा ते आचरेयुः तथा शिक्षितवान् इति । किन्तु 'लक्षवर्षेभ्यः पूर्वम् एव तिर्यग्-जन्तून्, तत्रापि अश्वान् मानवः शिक्षितवान्' इति इंग्लण्ड-देशस्य 'पालब्रान्' महाशयः सप्रमाणं कथयति ।



## आकाशे स्वस्तिकचिह्नम् ।



सहस्रवर्षेभ्यः स्वस्तिकचिह्नं हिन्दवः पवित्रं मन्यन्ते । टेक्सास् देशस्य सि.जे.रान्सम् हन्स् स्केटर महाभागः स्वाभिप्रायं प्रकटयति यत् 'भूवलयस्य अयस्कन्तक्षेत्रतः पुच्छाकारस्य किरणाः यदा निर्गताः तदा आकाशे स्वस्तिकाकारः दृष्टः स्यात्' इति ।

## भवन्तः जानन्ति वा ?.

१. अभिज्ञानशाकुन्तलं नाम संस्कृतनाटकं कः रचितवान् ?

२. 'इलियड्' तथा 'ओडिस्सि' इत्येतयोः ग्रन्थयोः लेखकः कः ?

३. 'पेरडैस् लास्ट्' इत्याख्यस्य आंग्लकाव्यस्य रचयिता कः ?

४. अर्थशास्त्रग्रन्थः केन रचितः ?

५. साहित्यार्थं नोबेल्पारितोषिकं इंग्लण्ड्देशस्य प्रधानमन्त्रिणा लब्धम् । सः मन्त्री कः ?

( उत्तराणि ६४तमे पृष्ठे )



# कृषिः सुवर्णं च

एकस्मिन् ग्रामे रामः नाम कृषिकः आसीत् । तस्य पित्रार्जिता किञ्चित् भूमिः आसीत् । रामः अतीव अलसः । श्रमेण सम्पादयितुं तस्य मनः न प्रवर्तते स्म । अतः तस्य पत्नी सर्वदा 'कृषिं न इच्छति चेत् मास्तु नाम । उपविश्य एव किमपि वाणिज्यं करोतु' इति तर्जयति स्म ।

रामः तु–' अस्मासु इदानीं का न्यूनता अस्ति ? सुखेन एव जीवनं प्रचलति किल ?' इति वदति स्म ।

"सुखम् इत्यस्य अर्थः' केवलं भोजनम् एव' इति वा ? 'भवत्याः कृते हारम्, आभरणानि च कारयामि' इति बहु दिनेभ्यः वदन् एव अस्ति । अद्यापि न कारितम् । निरीक्षणेन अहं श्रान्ता । भवतः आयेन अस्मिन् जन्मनि एतत् न शक्यते इति चिन्तयामि । किं वदामि मम अदृष्टम् ?" इति पत्नी वदति स्म । रामः सर्वं श्रुत्वा अपि मौनं तिष्ठति स्म ।

रामस्य मनसि अपि 'पत्न्याः कृते आभरणानि कारणीयानि' इति आशा आसीत् । पत्नी आभरणानि धरति चेत् बन्धुषु गौरवं वर्धते इति सः अपि जानाति स्म । किन्तु स्वकीयेन आयेन केवलम् उदरम्भरणं भवति स्म । किञ्चिदपि सञ्चयः न शक्यते स्म ।

एकस्मिन् दिने मित्रस्य समीपं गत्वा 'धनं सम्पादयितुं कः मार्गः सुलभः ?' इति पृष्टवान् । सः बहु सूचनाः दत्तवान् । किन्तु रामः एकाम् अपि न अङ्गीकृतवान् ।

'भवान् सर्वान् अपि क्लिष्टान् मार्गान् वदति । एते मार्गाः मह्यं न रोचन्ते । एकस्मिन् एव दिने सुलभेन बहु धनं येन लभ्यते, तादृशः एकः मार्गः मम अपेक्षितः' इति उक्तवान् रामः ।

'कोऽयं विचारः भोः भवतः ? एकस्मिन्

"भामह."



एव दिने बहु धनम् आवश्यकं चेत् चौर्यं करोतु । अन्यः मार्गः नास्ति' इति उक्तवान् स्नेहितः ।

रामः मनसि एव चिन्तितवान्–'चौर्यम् एव समीचीनम् । अस्मिन् ग्रामे सर्वे परिचिताः सन्ति । अतः अन्यं ग्रामं गत्वा तत्र चौर्यं करोमि' इति ।

अपरस्मिन् दिने प्रातः एव उत्थाय रामः पत्नीम् आहूय-' अहं ग्रामान्तरं गत्वा धनं सम्पाद्य आगच्छामि । आगमनानन्तरं भवत्याः कृते सुवर्णहारं कारयामि । एतत् तु सत्यम् । भवत्याः अभीष्टं पूरयामि । गृहे सावधानेन तिष्ठतु' इति उक्त्वा गतवान् ।

मध्याह्ने सः अन्यं ग्रामं गतवान् । तस्य ग्रामस्य विपणिं प्राप्तवान् । विपण्यां महत् वाणिज्यं प्रचलत् आसीत् ।रामः तत्र विपण्यां 'यः कोऽपि धनिकः स्यात् । तम् अन्विष्य रात्रौ तस्य गृहं गत्वा चौर्यं करोमि' इति चिन्तयित्वा एकैकम् अपि सध्यानं पश्यन् सञ्चरति स्म ।

सः तस्यां विपण्यां कृषिकदम्पती दृष्टवान् । तौ द्रष्टुं न धनिकौ । किन्तु तयोः सम्भाषणं श्रुत्वा रामः चकितः अभवत् । 'सुवर्णाभरणस्य स्यूतं पृथक् स्थापयतु । अन्यवस्तुभिः सह मेलनं न करोतु । गृहं गत्वा शीघ्रं तं स्यूतम् अन्तः स्थापयतु' इति पतिः उक्तवान् ।

तत् वचनं श्रुत्वा रामः तत्रैव स्थितवान् । 'अद्य मम समस्या परिहृता । धनं नीत्वा आभरणानि आनयामि इति चिन्तितवान् आसम् । इदानीं तु सिद्धम् आभरणम् एव लब्धम् इव । अहो मम सौभाग्यम् !' इति चिन्तयन् सः अतीव सन्तुष्टः ।

रामः ध्यानेन तौ दम्पती अनुसृतवान् । तयोः पृष्ठतः एव अटितवान् । सायं ताभ्यां सह एव तयोः ग्रामम् आगतवान् ।

रात्रौ रामः तयोः गृहं गत्वा 'भोः, अहं दूरात् आगतवान् । एषः प्रदेशः मम अपरिचितः । रात्रौ भवतः गृहे स्थातुं मम कृते अवकाशः दातव्यः' इति प्राथितवान् । सः कृषिकः आदरेण–'अवश्यम् अस्तु । आनन्देन तिष्ठतु । अद्य किं, यावत्पर्यन्तम् अस्मिन्

ग्रामे भवान् तिष्ठति, तावत्पर्यन्तम् अत्र एव वसतु' इति उक्तवान् ।

तस्मिन् दिने रात्रौ कृषिकस्य पत्नी रामस्य कृते मिष्टान्नभोजनं परिवेषितवती । 'अधिकं खादामि चेत् रात्रौ निद्रा न आगच्छति । तदा चौर्यं कर्तुं न शक्यते' इति चिन्तयित्वा किञ्चित् एव भुक्तवान् रामः ।

रात्रौ निद्राकरणतः पूर्वं कृषिकः पत्नीम् आहूय उक्तवान्-' सुवर्णाभरणस्य स्यूतः सुरक्षितः अस्ति किल ? अलक्ष्यं क्रियते चेत् मूषिकाः स्यूतं कर्तयेयुः' इति ।

तदा पत्नी उक्तवती-' अत्रैव उपरि कपाटिकायां स्थापितवती अहम्' इति ।

तत् वचनं श्रुत्वा रामः मनसि एव 'मम कार्यं फलितम्' इति चिन्तितवान् । सः तत् स्थानं सम्यक् दृष्ट्वा शयनं कृतवान् ।मध्यरात्रे सः उत्थाय तयोः कृषिकदम्पत्योः शयनगृहं गतवान् ।

कृषिकः गाढनिद्रायां मग्नः आसीत् । तस्य पत्नी अपि आपादमस्तकं शरीरम् आच्छाद्य गाढं सुप्तवती आसीत् ।

'एतौ अतीव अजागरूकौ । एतावत् सुवर्णम् एवम् एव स्थापयित्वा निर्भयेन कः वा निद्रां करोति ? तथापि मम सौभाग्येन एव एवम् अभवत्' इति चिन्तयन् रामः कपाटिकासमीपं गतवान् । कपाटिकायाम् एकः स्यूतः



आसीत् । सः स्यूतः किञ्चित् बृहदाकारकः भारयुतः च आसीत् । 'केवलम् आभरणेन स्यूतः एतावान् भारयुतः न भवति । धान्येषु आभरणं स्थापितं स्यात्' इति चिन्तयित्वा रामः स्यूतं बलेन आकृष्टवान् ।किन्तु तस्मिन् साहसे सः तत्रैव स्थितम् एकम् आसनं पातितवान् ।

अस्मिन् कोलाहले कृषिकः जागरितः । महान्तं शब्दं श्रुत्वा तस्य पत्नी अपि जागरिता । रामः तयोः पुरतः लज्जया नतमस्तकः भूत्वा स्थितवान् । पलायितुम् अपि तस्य अवकाशः न आसीत् ।

'रे !भवान् वा ? भवतः तत्र किं कार्यम् आसीत् ?' इति कृषिकः पृष्टवान् ।

रामः तूष्णीं स्थितवान्। तदा कृषिकः 'आभरणम् आवश्यकं वा ? तस्मिन् स्यूते किमपि नास्ति। सः स्यूतः उत्तमबीजैः पूरितः अस्ति, तावदेव। तत्र बीजान् विना अन्यत् किमपि नास्ति' इति उक्त्वा उच्चैः हसितवान्।

'द्रष्टुं मान्यः इव अस्ति भवान्! चौर्यं करोति वा ?' इति पत्नी पृष्टवती।

रामः—"अहं न चोरः। भवन्तः बहु सज्जनाः। अपरिचितेषु भवन्तः एवं सौजन्यं प्रदर्शयन्ति चेत् महते कष्टाय भवति। अतः सुवर्णम् अन्यत्र स्थापयित्वा भवत्सु किञ्चित् भयम् उत्पाद्य, अनन्तरं ददामि इति चिन्तितवान् आसम्। किन्तु स्यूते आभरणानि न आसन्। अतः भवद्भिः अहं वञ्चितः" इति उक्तवान्।

कृषिकः पुनः हसन् उक्तवान्- 'भवतः उद्देशः यः कोऽपि भवतु। अस्माकम् उद्देशः न तथा। अस्माकं गृहे सुवर्णस्य नाम अपि नास्ति। चतुर्वर्षपर्यन्तम् अहं अन्येषां भूमौ कृषिं कृतवान्। धनं सङ्गृह्य अहम् किञ्चित् भूमिं क्रीतवान्। अस्यां भूमौ कृषिं करोमि चेत् एकस्मिन् वर्षे एव अहं बहूनि आभरणानि क्रेतुं शक्नोमि। बहुदिनेभ्यः स्थितं तस्याः अभीष्टं साधयामि इति अस्ति विश्वासः। अतः एव बीजस्य एव आभरणम् इति नाम दत्वा व्यवहारः कृतः अस्माभिः" इति।

'किञ्चित् प्रदेशे कृषिः क्रियते चेत् एकस्मिन् एव वर्षे पत्न्याः कृते एषः कृषिकः बहूनि आभरणानि कारयितुं शक्नोति। मम तु अस्य अपेक्षया अधिकपरिमिता भूमिः अस्ति। आलस्यं त्यक्त्वा कार्यं करोमि चेत् अधिकं सम्पादयितुं शक्नोमि। पत्न्याः कृते सुवर्णमालां किं, सकलानि आभरणानि कारयितुं शक्नोमि' इति चिन्तयित्वा रामः तयोः दम्पत्योः कृतज्ञतां समर्पितवान्।

"भवतोः सहवासेन मम अज्ञानं दूरं गतम् इतःपरं अहं श्रमेण कृषिकार्यं करोमि।" इति उक्त्वा सः स्वगृहं गतवान्।






[ पिङ्गलस्य अग्रजौ गृहस्य समग्रसम्पत्तिं परस्परं विभज्य स्वीकृतवन्तौ । किन्तु मन्त्रस्यूत-विषये विवादः उत्पन्नः । वार्तां श्रुत्वा राजा उभौ अपि कारागारे स्थापितवान् । अन्यत्र पिङ्गलेन यस्यां नौकायां स्थितम् आसीत्, तस्याः नौकायाः अन्यनौकायाः च मध्ये युद्धम् आरब्धम् । नाविकनायकः सर्वेषाम् अपि दासनां हस्ते खड्गं दत्तवान् । ]

नाविकनायकस्य आज्ञानुसारं सर्वे दासाः बन्धनात् मोचिताः । नौकारक्षणार्थम् आदिश्य एकैकस्य हस्ते अपि धनुर्बाणादीनि आयुधानि दत्तानि । 'इदानीं नौकायाः रक्षणार्थम् एते दासाः एव शरणम्' इति नाविकनायकः चिन्तितवान् । अतः सः उक्तवान्– 'एतत्क्षणात् एव भवन्तः न दासाः, अपि तु वीरयोद्धारः ! अस्माकं नौकां वशीकर्तुं शत्रवः प्रयत्नं कुर्वन्तः सन्ति । यदि वयं पराजिताः भवामः, तर्हि आजीवनं अस्माभिः तेषां दास्यम् अङ्गीकरणीयं भवति । यदि विजयिनः भवामः, तर्हि स्वच्छन्दं जीवितुं शक्नुमः । अतः भवद्भिः स्वप्राण-रक्षणार्थं तथा स्वातन्त्र्यार्थं च प्राणान् अपि अगणयित्वा युद्धं करणीयम् । अस्मिन् युद्धे जयः अस्माकम् एव । यदा जयः प्राप्यते तदा एकैकस्य अपि शतं दीनारान् उपायनरूपेण ददामि । अतः प्राणान् पणीकृत्य युद्धं कुर्वन्तु' इति ।



दासेषु कोऽपि नाविकनायकस्य वचनं न विश्वसिति। यतः नाविकनायकेन पूर्वं दत्तां पीडां कोऽपि न विस्मृतवान् अस्ति। तथापि अस्मिन् सन्दर्भे किं करणीयम् ?

शत्रुनौकातः अग्निबाणाः आगच्छन्तः एव सन्ति। नाविकनायक-पक्षीयानां तु अग्नेः शमने एव बहु कष्टम्। 'यदि अग्निना नौका दग्धा भवति तदा इतरैः सह आत्मनः अपि नाशः भविष्यति' इति सर्वे दासाः जानन्ति। अतः आत्मनाशनिवारणार्थं वा युद्धम् अनिवार्यम् आसीत्।

दासानां मनोविप्लवं पिङ्गलः ज्ञातवान्। नाविकनायक-विषयक-कोपेन पिङ्गलस्य मनः अपि ज्वलति। नाविकनायकस्य आज्ञा तेन अपि श्रुता अस्ति। अतः सः चिन्तितवान्– 'इदानीं कोऽपि निर्णयः स्वीकरणीयः एव। नौका यथा जले मज्जिता न भवेत् तथा रक्षणं तु प्रथमं कर्तव्यम्। बाह्यशत्रुणा सह युद्धं तु करणीयम् एव। किन्तु एतेन समस्या परिहृता न भविष्यति। नाविकनायकः यावत् जीवति, तावत्पर्यन्तं सौख्यं नास्ति। अतः नाविकनायकः अपि नाशनीयः। अनन्तरं सन्दर्भानुसारं 'शत्रुभिः सह सन्धिः सम्पादयितुं शक्यते वा ?' इति चिन्तनीयम्। अन्यथा युद्धे प्राणार्पणं तु अस्ति एव' इति।

पिङ्गलः एवं निश्चित्य स्वमित्राणां समीपे स्वकीयं विचारम् उपस्थापितवान्। 'शत्रोः आक्रमणं विस्मृत्य प्रथमं नाविकनायकः नाशनीयः' इति उक्त्वा एतदर्थं सर्वान् प्रोत्साहितवान्। सर्वे एतत् अङ्गीकृतवन्तः।

युवकः बुद्धिशाली साहसी धैर्यवान् च पिङ्गलः तत्क्षणे एव तेषां नायकः जातः। सर्वे दासाः नवोत्साहेन पिङ्गलस्य आदेशम् अनुसर्तुं सिद्धाः सञ्जाताः।

पिङ्गलः सिंहगर्जनं कुर्वन् उच्चैः उक्तवान्- 'अये, राक्षस ! नाविकनायक ! भवतः वचनानि कः विश्वसिति ? पश्यतु, अद्य भवतः कथा समाप्ता' इति। 'एतम् एतदनुचरान् च मारयन्तु' इति च वदन् सः अग्रे गतवान्।

दासाः सर्वे पिङ्गलम् अनुसृतवन्तः। ते

सिहगर्जन कुर्वन्तः खड्गम् आकृष्य नाविक-नायकस्य तदनुचराणां च उपरि पतितवन्तः ।

अनिरीक्षिततया उत्पन्नां विकट-परिस्थितिं दृष्ट्वा नाविकनायकः दिग्भ्रान्तः । किं प्रचलति ? इदानीं किं करणीयम् ?' इति सः न ज्ञातवान् ।



एकत्र शत्रवः अग्निवर्षणं कुर्वन्तः सन्ति । अपरत्र स्वनौकायां स्थिताः दासाः खड्गं स्वीकृत्य आक्रमणं कृतवन्तः सन्ति !

दासानां खड्गानां आहुतिं गच्छतः अनुचरान् दृष्ट्वा नाविकनायकस्य कोपः अत्युग्रः जातः । अनुचराणां सिद्धतायाः पूर्वम् एव दासानां खड्गाः एकैकं विच्छिद्रीकुर्वन्तः सन्ति । खड्गप्रहारैः आत्मानं रक्षयन् नाविकनायकः-"स्वामिद्रोहिणः, वञ्चकाः एते ! मारयन्तु एतान् । एकोऽपि जीवितः न भवेत्" इति आक्रोशनं कृतवान् । स्वयं खड्गम् आकृष्य दासानाम् उपरि पतितवान् । बलिष्ठस्य नाविकनायकस्य खड्गप्रहारेण पञ्चषाः दासाः गतप्राणाः जाताः । स साक्षत् यमदूतः इव दृश्यते स्म ।

एतं दृष्ट्वा भीताः बहवः दासाः आत्मरक्षणार्थं पलायनसूत्रं पठितवन्तः । नौकायां कुत्र वा धावन्ति ते ? केचन तत्रैव कोणेषु निलीनाः । पिङ्गलः एतत्सर्वं दृष्टवान् । झटिति खड्गम् आकृष्य आक्रमणं कुर्वन्- "श्रण्वन्तु भ्रातरः ! एतं नाविकनायकम् अहं बलिं स्वीकरोमि । यदि भवन्तः पलायनं कुर्वन्ति तर्हि समुद्रे पतन्ति । जीविताशां त्यक्त्वा युद्धं कुर्मः । स्वातन्त्र्यार्थं एतान् सर्वान् नाशयामः । अस्माकं शक्तिम् एकवारं प्रदर्शयामः' इति उच्चैः उक्तवान् ।

पलायनरताः दासाः इदानीं पुनः उत्साहिताः । पुनरपि धैर्यं सम्प्राप्य ते युद्धं कर्तुम् आरब्धवन्तः । पिङ्गलः साक्षात् नाविकनायकस्य उपरि आक्रमणं कृतवान् । प्रथमप्रहारेण एव नाविकनायकस्य उरस्थलं छिन्नम् । 'हा भैरवि !' इति सः उद्गारं कृतवान् । अनन्तरं सः दृष्टया अग्निवर्षणं कुर्वन् पिङ्गलस्य उपरि पतितवान् । नाविकनायकः चिन्तितवान्- "बाह्यशत्रोः सम्मुखीकरणतः पूर्वम् आन्तरिकशत्रुः निवारणीयः" इति ।

नाविकनायकस्य देहशक्तिं युद्धकौशलं च दृष्ट्वा पिङ्गलः "साक्षात् युद्धे नाविकनायकस्य नाशः कर्तुं न शक्यते एव" इति चिन्तितवान्। शत्रोः खड्गप्रहारेण आत्मानं रक्षन् पार्श्वे उत्पतितवान्। नाविकनायकः किञ्चित् अग्रे आगतः। तदा तस्य पादे एका रज्जुः लग्ना। सः अधोमुखतया अधः पतितवान्।

अवकाशस्य सदुपयोगं स्वीकर्तुं पिङ्गलः अग्रे धावितवान्। यावत् सः खड्गप्रहारं कर्तुम् उद्युक्तः, तावति काले नाविकनायकः पार्श्वपरिवर्तनं कृतवान्। पिङ्गलस्य खड्गः नौकायाः काष्ठे लग्नः, छिन्नः च।

एतावति काले नाविकनायकः अपि उत्थितः। विकटाट्टहासं कुर्वन् सः उक्तवान्- "ओ हो ! भवान् एव वा दासानां नायकः? भवन्तं विश्वस्य वराकाः ते विद्रोहम् आचरन्तः सन्ति। इदानीं पश्यतु भवतः परिस्थितिम्। हस्तस्थितेन एतेन खड्गेन भवन्तं छित्वा समुद्रे क्षिपामि। अनन्तरं भवतः अनुचराणां विषयं पश्यामि" इति।

उद्विग्नः नाविकनायकः इदानीं युद्धस्य आवेगे अस्ति। अतः सः, पिङ्गलः किं कुर्वन् अस्ति इति न लक्षितवान्। यदा खड्गः छिन्नः तदा उपायं चिन्तयन् पिङ्गलः अन्यखड्गार्थम् अन्वेषणं कृतवान्। किन्तु कुत्रापि खड्गः न लब्धः। अनुचराः तु शत्रुभिः सह तीव्रं युद्धं कुर्वन्तः सन्ति।

पिङ्गलः विद्युच्चपलया गत्या पार्श्वे उत्प्लुत्य एकां रज्जुं स्वीकृतवान्। तस्याः अन्ते ग्रन्थि



बद्धा पाशं निर्मितवान् । अनन्तरं युद्धार्थं सज्जीभूय नाविकनायकस्य पुरतः स्थितवान् ।

क्रोधतप्तः नाविकनायकः वेगेन पिङ्गलस्य उपरि खड्गप्रहारं कृतवान् । तदा अवकाशं प्रतीक्षमाणः पिङ्गलः पाशं नाविकनायकस्य कण्ठे क्षिप्तवान् । पाशः लक्ष्ये लग्नः । पिङ्गलः रज्जुम् आकर्षन् 'हो हो ! क्रूरः नाविकनायकः जाले पतितः' इति वदन् परिवृत्य धावितवान् ।

पाशे बद्धः नाविकनायकः महावृक्षः इव सशब्दं पतितवान् । कण्ठे सुदृढं लग्नां रज्जुं खड्गेन छेत्तुं सः प्रयत्नं कृतवान् । एतत् दृष्ट्वा पिङ्गलः स्वसहचरान् शीघ्रम् आगन्तुम् आहूतवान् ।

झटिति द्वित्राः दासाः धावन्तः आगतवन्तः । पतितं नाविकनायकं दृष्ट्वा तस्य उपरि आक्रमणं कृतवन्तः । खड्गप्रहारेण एकक्षणे एव तस्य शरीरं विच्छिन्नं कृतवन्तः । तथापि तेषां कोपः न शान्तः ।

पिङ्गलः नाविकनायकेन सह युद्धं कुर्वन् आसीत् इति कृत्वा परितः किं प्रवर्तते इत्यपि तेन न परिशीलितम् आसीत् । नाविकनायकस्य मरणानन्तरम् इदानीं सः एकस्य दासस्य हस्ततः खड्गम् एकं स्वीकृत्य, कोणे प्रचलत्, युद्धं दृष्ट्वा तत्र धावितवान् । तत्र अङ्गुलिगणनीयाः नाविकनायकसहचराः आसन् । केचन खड्गप्रहारेण मृताः । अन्ये केचन व्रणिताः, बन्धने आगताः । एवं विरोधिनः सर्वे विनष्टाः ।

एतावति काले शत्रुनौकायां स्थिताः सैनिकाः





कोलाहलं कुर्वन्तः एतस्याः नौकायाः समीपम् आगताः। इदानीम् अपि ते बाणप्रयोगं कुर्वन्तः एव सन्ति। शत्रुनौकायां प्रवृत्तः कलहः तैः अपि प्रायः ज्ञातः। अतः अग्निगोलप्रयोगः इदानीं न प्रचलति स्म।

इदानीं पिङ्गलः चिन्तामग्नः। शत्रुनौकया सह युद्धं कृत्वा जयं प्राप्तुं तु कष्टम् अस्ति। यतः पिङ्गलस्य अनुचराः सङ्ख्यया अल्पाः, शत्रूणां शरणं गतं चेदपि लाभः न स्यात्। ते शत्रवः एतान् सर्वान् बन्धयित्वा पुनः दास्यवृत्तौ योजयेयुः। एतेन दास्यविमुक्ताः पुनः दासाः एव भवन्ति। वस्तुतः शत्रुनौकायां कति जनाः सन्ति? कीदृशाः ते? तेषां सामर्थ्यं वा कियत्? किमपि न जानाति पिङ्गलः।

पिङ्गलः नाविकनायकतः वशीकृतस्य दूरवीक्षकस्य साहाय्येन शत्रुनौकां परिशीलितवान्। तस्यां नौकायां असङ्ख्याः जनाः दृष्टाः। एतैः सह युद्धेन किमपि प्रयोजनं नास्ति इति पिङ्गलः निश्चितवान्। "प्रथमं श्वेतपताकां प्रदर्श्य अस्माकं परिस्थितिः मनोगतिः च शत्रूणां कृते सूचनीया। अनन्तरम् सन्धिं संसाध्य यथाकथञ्चित् इतः दूरगमनम् एव श्रेयस्करम्" इति सः चिन्तितवान्।

इदानीं शत्रुनौका अनतिदूरे एव अस्ति। विलम्बः चेत् ते इतोऽपि समीपम् आगच्छन्ति! तावति काले कोऽपि निर्णयः आश्रयणीयः एव।

पिङ्गलस्य आज्ञानुसारं नौकायाः प्रधानस्य आधारस्तम्भस्य उपरि श्वेता पताका स्थापिता। शत्रवः एतत् दृष्टवन्तः। शत्रुनौकायां क्रियमाणः जयोद्घोषः स्पष्टं श्रुतः।

पिङ्गलः ध्वनिवर्धिकाम् एकां काहलां मुखे स्थापयित्वा नौकायां सञ्जातस्य कोलाहलस्य विवरणं दत्वा उक्तवान्-"भोः भ्रातरः! भवतां नौकायाः उपरि यः आक्रमणं कृतवान्, तेन सह अस्माकं कोऽपि सम्बन्धः नास्ति। सः इदानीं अस्माभिः मारितः च। भवतां नौकां वशीकर्तुं वयं न इच्छामः। इदानीं वयं कुत्राऽपि नौकास्थानं गन्तुम् इच्छामः। ततः स्वस्वदेशं गच्छामः च। अतः कृपया भवन्तः सहकुर्वन्तु।

अस्माभिः सह मैत्र्या व्यवहरन्तु । भवन्तः स्वमार्गे गच्छन्तु । वयम् अपि अस्मदीयमार्गम् अनुसरामः । एतेन उभयपक्षयोः अपि क्षेमः'' इति ।

एषा वार्ता शत्रुनौकया प्राप्ता । अनन्तरं तत्र कश्चन कोलाहलः आरब्धः । अल्पे एव काले सः कोलाहलः अपि शान्तः । शत्रुनौकातः एकः कठोरः कण्ठध्वनिः श्रुतः- ''दासानां भवतां समुद्रे स्वेच्छया नौकां चालयितुम् अधिकारः नास्ति एव । एतदतिरिच्य भवन्तः नाविकनायकं तदनुचरान् च निर्दयं मारितवन्तः । अक्षम्यम् अपराधं कृतवन्तः । एतस्य दण्डनं भवेत् एव । अन्यथा भवताम् अनुकरणं कृत्वा अस्माकं नौकायाः दासाः अपि अस्मान् मारयेयुः । अतः विरोधं विना अस्माकं शरणं गच्छन्तु । सर्वाणि वस्तूनि अस्माकं कृते समर्पयन्तु । अन्यथा परिणामः विपरीतः भवेत्'' इति ।

एतत् श्रुत्वा पिङ्गलः निर्विण्णः । शत्रुनौका न वाणिज्यनौका, अपि तु समुद्रचौराणां नौका सा'' इति पिङ्गलः निश्चितवान् । एतेषां क्रूराणां वशगमनं नाम पुनः दास्यस्य अङ्गीकरणम् एव । एतत् पिङ्गलः अपि न इच्छति । तदीयाः अनुचराः अपि न इच्छन्ति ।

पिङ्गलः संक्षेपतया परिस्थितिम् अनुचरान् निवेदितवान् । शत्रुभिः सह युद्धं कर्तुं सर्वे ऐकमत्येन सिद्धाः सञ्जाताः । पिङ्गलस्य धैर्य- दृढ-



चित्ततादयः तेषु अपि प्रतिफलिताः आसन् ।

सद्यः एव श्वेतपताका अवतारिता । सर्वे पिङ्गलस्य नायकत्वे विश्वासं प्रकटयन्तः जयघोषं कृतवन्तः ।

''सङ्ख्याबलेन अधिकाः शत्रवः यदि अस्माकं नौकाम् आरोहन्ति, तदनन्तरं किमपि कर्तुं न शक्यते । अतः यावच्छीघ्रं शत्रुनौकातः सुदूरं गन्तव्यम् ! तदर्थं बाणयुद्धं कुर्वद्भिः शत्रवः यथा समीपं न आगच्छेयुः तया प्रयत्नः करणीयः । यदि सर्वे उपायाः असफलाः भवन्ति, तर्हि उद्देशपूर्वकं नौकयोः मध्ये सङ्घट्टनं करणीयम् । द्वयोः अपि सर्वनाशः भवेत्'' इति पिङ्गलः चिन्तितवान् ।

पुनः युद्धम् आरब्धम् । पिङ्गलस्य अनुचराः शत्रुनौकायाः उपरि निरन्तरं बाणप्रयोगं

कुर्वन्तः आसन् । पिङ्गलः अपि बाणप्रयोगं कुर्वन् नौकां प्रतिनिवर्तयितुम् उक्तवान् । किन्तु शत्रुनौकां समीपम् आगतां दृष्ट्वा 'एषा योजना न फलकारिणी' इति सः ज्ञातवान् । शत्रुनौका तु द्विगुणितवेगेन आगच्छन्ती अस्ति ! इतःपरं देवः एव शरणम् !

पिङ्गलः तत्क्षणे एव अन्तिमनिर्णयं स्वीकृतवान् । "विजयः मरणं वा, किमपि एकं निर्णीतं भवेत् एव" इति निर्णीय पिङ्गलः स्वसहचरान् आज्ञापितवान्– "अस्मदीयां नौकां वेगेन नीत्वा शत्रुनौकया सह संघट्टनं कुर्वन्तु' इति ।

अनुचराः सर्वे पिङ्गलस्य आज्ञां शिरसा वहन्तः, जीविताशां त्यक्त्वा स्वनौकां शत्रुनौकायाः दिशि वेगेन चालितवन्तः । एतत् दृष्ट्वा शत्रवः एकक्षणं चकिताः । किन्तु सद्यः एव पिङ्गलस्य योजनां ते ज्ञातवन्तः । शत्रुनौकायाम् इदानीं भीतिजनितः हाहाकरः समुत्पन्नः ।

शत्रवः स्व-नौकां प्रतिनिवर्तयितुं प्रयत्नं कृतवन्तः । किन्तु तेषां नौका वेगेन धावन्ती आसीत् किल ? तत्क्षणे तस्याः प्रतिनिवर्तनं कर्तुम् न शक्तम् एव । एवं तेषां प्रयत्नः असफलः सञ्जातः । पिङ्गलः तु स्वनौकां वेगेन नेतुं प्रोत्साहयन् एव आसीत् ।

सर्वेषु पश्यत्सु एव, पिङ्गलस्य नौका महता वेगेन शत्रुनौकां घर्षितवती एव । अपरस्मिन् क्षणे शताधिक– कण्ठानाम् आर्तनादः समुद्रे प्रतिध्वनितः ।

नौकयोः परस्पर-संघट्टनेन नौकायां महान् कम्पः उद्भूतः । कुत्र किं जातम् ? का गतिः ? इति केनापि न ज्ञातम् । नौकायाः सर्वाणि अङ्गानि भग्नानि सन्ति । केचन समुद्रे पतिताः । केचन तत्रैव प्राणं त्यक्तवन्तः । अन्ये केचन भीत्या मूर्च्छां गताः ।

पिङ्गलः तु महाबलवता पुरुषेण सवेगं क्षिप्तः इव, नौकाकम्पवशात् आकाशम् उत्पतितः सन्, समुद्रजले सुदूरे कुत्रापि पतितवान् ।

—(अनुवर्तते)






# अत्याशा अनर्थाय

वेतालः चिन्तामग्नः- "राजा त्रिविक्रमः पुनः आगमिष्यति। तस्मै नूतना कथा वक्तव्या। कां वा कथां कथयिष्यामि" ? इति। तावति काले, त्रिविक्रमः वृक्षम् आरुह्य शाखायां लम्ब-मानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं गन्तुं प्रवृत्तः। शवे स्थितः वेतालः त्रिविक्रमं प्रति- "भोः त्रिविक्रम ! 'साहसे श्रीः वसति' इति एषा लोकोक्तिः भवन्तं दृष्ट्वा एव लोके प्रसिद्धिं नीता। कार्ये भवतः श्रद्धा अचला सुदृढा च। अचलश्रद्धं भवन्तं दृष्ट्वा अहं भावयामि यत् भवान् अपूर्व-शक्तीः सम्पादयितुं प्रयतमानः अस्ति इति। मन्त्रैः अपूर्वशक्ति- सम्पादनं किञ्चित् दुष्करम् एव। यदि महता प्रयत्नेन तादृशशक्तयः सम्पाद्यन्ते, ताः अपि स्वार्थाय न उपयोक्तव्याः। यदि स्वार्थाय उपयुज्यन्ते तदा फलापेक्षया अनर्थाः एव अधिकाः भवेयुः। अत्र दृष्टान्तरूपेण रामशर्म-कृष्णशर्मनामकयोः पितापुत्रयोः कथां

## वेतालकथा



वदामि । श्रृणोतु । तेन मार्गायासः अपि भवता न ज्ञायेत" इति उक्त्वा कथायाः आरम्भं कृतवान्—

'वैशाली नाम नगरम् । तत्र रामशर्मा नाम ब्राह्मणः। पौरोहित्यं तस्य वृत्तिः। सः पौरोहित्येन यथेष्टं धनम् अपि सम्पादयति स्म । तस्य कुटुम्बः अपि न महान् । गृहे गृहिणी पुत्रः पुत्री च इति आहत्य चत्वारः एव । पित्रार्जिता भूमिः अपि पर्याप्ता आसीत् । अतः रामशर्मणः गृहसमस्या न आसीत् ।

एवं रामशर्मा धनेन हेतुना कदापि क्लेशं न अनुभूतवान् । गृहिणी प्रियवादिनी, पुत्रः विधेयः, पुत्री अपि निपुणा आसीत् । तथापि काचित् अतृप्तिः रामशर्माणं सदा बाधते स्म । 'राजास्थाने स्थिताः कवयः, पण्डिताः, सङ्गीतज्ञाः च बहु धनं सम्पादयन्ति । यथेष्टं सुखम् अनुभवन्ति च । यदि अहम् अपि राज्ञः कृपापात्रं भवेयम्, तदा महता वैभवेन जीवितुं शक्नोमि' इति । एतदेव अतृप्तेः मूलं कारणम् आसीत् ।

रामशर्मणः पुत्रः कृष्णशर्मा तरुणः विद्यावान् च अभवत् । पित्रा सह पौरोहित्यम् अपि आचरति स्म । तदा रामशर्मा चिन्तितवान्— 'सद्यः एव हिमालयं गच्छामि । तत्र कस्यापि सिद्धपुरुषस्य सेवां कृत्वा, तस्य अनुग्रहेण अपूर्वां शक्तिं सम्पाद्य प्रत्यागमिष्यामि। अनन्तरं धनिकाः अपि यथा मां असूयया पश्येयुः तथा जीविष्यामि' इति ।

एवं निश्चित्य गृहे कस्मै अपि अनुक्त्वा रामशर्मा हिमालयं गतवान् । तत्र कस्यापि सिद्धपुरुषस्य सेवां कृत्वा तस्य कृपापात्रम् अभवत् ।

रामशर्मा किमर्थं मां सेवते ? किं कारणं स्यात् ? इति सिद्धपुरुषः चिन्तयन् रामशर्माणं पृष्टवान्- 'वत्स, शर्मन्! संसारकष्टात् भीताः केचित् अटन्ति, एवं हिमालयम् अपि आगच्छन्ति । एषः च संसारिणां स्वभावः । अतः दोषत्वेन एतत् न परिगणयामि । किन्तु भवतः पुत्रः अस्ति, पुत्री च अस्ति । तयोः विवाहादिकं भवता अवश्यं करणीयम् । अतः भवान् सद्यः एव गृहं प्रति गच्छतु । एतावन्ति दिनानि भवान् मां सेवितवान् । यत् इच्छति

तत् पृच्छतु । दास्यामि अहम्, इति । रामशर्मा अञ्जलिं बध्वा प्रार्थितवान्– "महात्मन् ! येन मन्त्रेण अपूर्वा शक्तिः सम्पादयितुं शक्या, तादृशं मन्त्रं कृपया उपदिशतु" इति ।

'तथास्तु' इति उक्त्वा सिद्धपुरुषः- "रामशर्मन् ! तादृशं मन्त्रम् उपदिशामि, येन मन्त्रेण अपूर्वा शक्तिः आविर्भविष्यति । धनाशया सा शक्तिः न उपयोक्तव्या । लोकोपकाराय तस्याः उपयोगं करोतु । तेन भवतः कीर्तिः लोके प्रसरिष्यति, भवान् च सुखी भविष्यति" इति स्पष्टं बोधयित्वा, रामशर्मणे मन्त्रम् उपदिष्टवान् ।



रामशर्मा एवम् अपूर्वशक्तिं सम्पाद्य सन्तोषेण गृहं प्रत्यागतवान् । रामशर्मणः अनुपस्थितौ कृष्णशर्मा पौरोहित्येन कुटुम्बं यथापूर्वं पोषयन् आसीत् ।

यदा रामशर्मा ग्रामं प्रत्यागतवान् तदा वैशालीराज्यं क्षामपीडितम् आसीत् । अनावृष्ट्या जनानां कष्टं वचनातीतम् आसीत् । वर्षद्वयात् वृष्टेः नाम अपि न श्रुतम् । वृष्ट्यर्थं ज्यौतिषिकाणां सूचनानुसारेण वरुणजपान् रुद्रयागान् च राजा स्वयं कृतवान्, देशे च कारितवान् । किन्तु फलं शून्यम् एव । अन्ते राजा प्रकटीकृतवान्– 'मेघाः यथा वर्षन्ति तथा यः प्रयत्नं करोति' तं कनकैः अभिषिञ्चामि' इति ।

कनकाभिषेकवार्तां रामशर्मा अपि श्रुतवान् । सः रहसि पुत्रम् आहूय महता उत्साहेन उक्तवान्-- 'वत्स ! कतिपयदिनेभ्यः पूर्वं हिमालयम् अहं गतवान् इति भवान् जानाति एव । तत्र हिमालये एकं सिद्धपुरुषं भक्त्या श्रद्धया च सेवितवान् । सन्तुष्टः सिद्धपुरुषः मम कृते अद्भुतशक्ति-जनकं मन्त्रम् उपदिष्टवान् । तस्य मन्त्रस्य शक्त्या यथा मेघाः वर्षेयुः तथा कर्तुं शक्नोमि' ।

पितुः वचनं श्रुत्वा आश्चर्येण आनन्देन च कृष्णशर्मा उक्तवान्– 'आश्चर्यम् एतत् ! मेघाः यथा वर्षेयुः तथा कर्तुं मन्त्रशक्तिः किं सम्पादिता । ? तात ! जनाः अनावृष्ट्या नरकवेदनाम् अनुभवन्तः सन्ति । मन्त्रशक्त्या अनावृष्टिं निवार्य सर्वेषां सन्तोषं जनयतु' इति ।

'राज्यस्य जनस्य च उपकारः तु कर-

णीयः एव। किन्तु अस्मदीयम् अपि किञ्चित् आलोचनीयम्। एतद्विषयं राज्ञे अनिवेद्य एव यदि अहं कार्यं करिष्यामि, तदा वृष्टेः कारणम् अहम् एव इति राजा कथं जानीयात्? कथं वा कनकैः माम् एव अभिषिञ्चेत्? अतः राज्ञे निवेद्य एव अग्रे पदं स्थापयामि' इति रामशर्मा उक्तवान्।

कृष्णशर्मा कदापि पितरं न प्रतिवदति स्म। अद्य तु किञ्चित् धैर्येण पितरं उद्दिश्य 'तात! अस्माकं वृत्या वयं सुखेन एव जीवामः। कनकाभिषेकेण अस्माकं किं प्रयोजनम्? अत्याशा अनर्थाय' इति उक्तवान्।

पुत्रस्य वचनम् श्रुत्वा क्रुद्धः रामशर्मा पुत्रं भर्त्सयन् उक्तवान्– 'मूढ! न जानाति लोकव्यवहारम्। तूष्णीं तिष्ठतु। अपूर्वः एषः मन्त्रः भवता अपि ज्ञातव्यः। अहम् उपदिशामि, श्रद्धया गृह्णातु' इति। अनन्तरं तं मन्त्रं पुत्राय अपि उपदिश्य तदनुष्ठानक्रमं सूचितवान्– 'स्नानं कृत्वा, शुचिः भूत्वा प्रथमं परमेश्वरं स्मरतु। अनन्तरम् उत्तराभिमुखम् एकेन पादेन स्थित्वा, एतं मन्त्रं त्रिवारम् उच्चारयतु। तदा भवता अभिप्रेतस्य अर्थस्य सिद्धिः भविष्यति। अनन्तरं उपसंहर्तुम् तेन एव क्रमेण अन्यः त्रिवारं पठेत्। अतः भवते अपि मन्त्रम् उपदिष्टवान्' इति।

रामशर्मा महाराजस्य समीपं गत्वा स्व-



सामर्थ्यं निवेदितवान् । एतत् श्रुत्वा सन्तुष्टः राजा प्रार्थितवान्– 'कृपया शीघ्रातिशीघ्रम् अनावृष्टिं निवारयतु' इति ।

वैशालीनगरस्य उत्तरस्यां दिशि ईश्वरदेवालयः अस्ति । रामशर्मा तत्र गत्वा कूपोदकेन स्नानं कृत्वा देवालयस्य पुरतः आगतवान् । एकेन पादेन स्थित्वा त्रिवारं मन्त्रम् उच्चारितवान् ।

निर्मले अपि आकाशे झटिति एव मेघाः उदिताः । चतसृषु अपि दिक्षु गगनतलं कृष्णमेघैः आवृतम् । मेघध्वनिः सर्वत्र व्यापृतः । विद्युत् अपि प्रकाशते स्म । वृक्षान् कम्पयन् वायुः अपि वाति स्म । बहोः कालात् अनन्तरं जनाः महतीं वृष्टिं दृष्टवन्तः ।

जनाः आनन्देन उत्साहेन च मार्गे नर्तितुम् आरब्धवन्तः । तेषां सन्तोषस्य पारम् एव न आसीत् । राजा वृष्टौ आर्द्रीभवन् परिवारेण सह ईश्वरदेवालयं आगतवान् । तत्र स्थितं रामशर्माणं नमस्कृत्य उक्तवान्– ''महात्मन् ! भवतः अनुग्रहेण राज्यं रक्षितम् । यावत् वृष्टिं स्थगयितुं सूचयामि तावत् मेघाः एवम् एव वर्षन्तु'' ।

अनन्तरं विशाले सुवर्णमये शरावे सुवर्णानि रत्नानि च पूरयित्वा राजा रामशर्मणे दत्वा प्रतिनिवृत्तवान् ।

देवालयस्य बहिः धाराकारेण मेघाः वर्षन्तः आसन् । निर्जनः देवालयः । तत्र दीपस्य प्रकाशे रामशर्मा रत्नानि गणयन् आसीत् । एतत्सर्वं वीक्षमाणाः चत्वारः चोराः रामशर्मणः





गलं गृहीत्वा मारितवन्तः । तत्र स्थितानि सुवर्णानि रत्ननि च अपहृत्य पलायितवन्तः ।

सायङ्कालपर्यन्तं मेघः वर्षन् एव आसीत् । 'वृष्टिः पर्याप्ता' इति मन्त्रिभिः सह आलोच्य राजा, वृष्टिं स्थगयितुं सूचनां दातुं मन्त्रिणम् एव प्रेषितवान् । मन्त्री ईश्वरालयम् आगत्य हतं रामशर्माणं दृष्ट्वा, आश्चर्यचकितः अभवत् । अनुक्षणम् एव राज्ञः समीपम् आगत्य वार्तां निवेदितवान् ।

दुःखकरम् अन्याय्यं च वृत्तान्तं श्रुत्वा राजा चिन्ताक्रान्तः । 'वृष्टिं स्थगयितुं रामशर्मणः पुत्रः जानीयात्' इति राजा मन्त्रिणं कृष्णशर्मणः समीपं प्रेषितवान् ।

मन्त्री शीघ्रातिशीघ्रं रामशर्मणः गृहं गत्वा, रामशर्मणः मरणवार्तां पुत्राय निवेद्य प्रार्थितवान् 'कृपया वृष्टिं स्थगयतु । अन्यथा जलेन प्रलयः एव भवेत्' इति । पितुः मरणवार्तां श्रुत्वा कृष्णशर्मा दुःखेन विलपितुम् आरब्धवान् । तस्य माता अनुजा च उच्चैः रोदितुम् एव प्रवृत्तवत्यौ । मन्त्री तेषां दुरवस्थां दृष्ट्वा स्वयम् अपि खिन्नः शनैः शनैः उक्तवान्:– आर्य ! कृष्णशर्मन् ! मातः ! वत्से! समाश्वसन्तु । अनावृष्ट्या शुष्कीभूय विशीर्णा वैशालीनगरी पूज्येन रामशर्मणा रक्षिता । नीचाः तस्य वधं कृत्वा भवतः तथा प्रजाजनान् शोकसागरे निमज्जितवन्तः । तान् प्रयत्नशतेन अपि अन्विष्य राजा दण्डयिष्यति एव । किन्तु इदानीं जलेन प्रलयं प्राप्यमानं राज्यं रामशर्मणः पुत्रेण भवता एव रक्षणीयम् । राजा एवम् एव प्रार्थयते'

किञ्चित्कालानन्तरं कृष्णशर्मा दुःखनिरोधं कृत्वा स्नानं समाप्य आगतवान् । गृहस्य द्वारे एकेन पादेन स्थित्वा नेत्रद्वयम् अपि निमील्य शिवं ध्यायन् उपसंहरणमन्त्रं त्रिवारं पठितवान् । वर्षन्ती वृष्टिः झटिति एव स्थगिता । जनाः सन्तोषेण नर्तनं कृतवन्तः ।

मन्त्री कृष्णशर्माणं शिरसा नमस्कृत्य– 'आर्य ! कृष्णशर्मन् ! भवतः पितरं महाराजः यथा सम्मानितवान्, ततः अपि द्विगुणित-

तया भवन्त श्वः सम्मानयिष्यति । श्वः अहं एव स्वयम् आगत्य भवन्तं गजे आरोप्य राजा-स्थानं नेष्यामि' इति उक्त्वा प्रतिनिवृत्तः ।

परेद्युः मन्त्री छत्रेण, चामरेण, गजेन, परिवारेण च सह कृष्णशर्माणं नेतुं तस्य गृहम् आगतवान् । किन्तु तस्य गृहं तदा कीलितम् आसीत् । कृष्णशर्मा तस्य माता अनुजा च कुत्र गताः इति केनापि न ज्ञातम् । मन्त्री तु कीलितं गृहं आश्चर्येण दृष्ट्वा व्याकुलितः अभवत् ।

वेतालः एवं कथां समाप्य-'राजन् ! कृष्ण-शर्मा राजसम्मानं निराकृत्य गृहम् अपि त्यक्त्वा किमर्थं गतवान् ? तस्य पित्रा महता श्रमेण सम्पादिता अपूर्वा मन्त्रशक्तिः तस्य वशे आसीत् खलु? तया शक्त्या राज्ञः आदरपात्रं भूत्वा वैशाली नगरे एव सुखेन जीवितुं शक्यम् आसीत् खलु ? धनेन हेतुना पितुः इव स्वस्य अपि प्राणापायः सम्भवेत् इति कृष्णशर्मा किं भीतः? अथवा कारणान्तरम् अस्ति वा ? राजन् ! एतेषां सन्दे-हानाम् उत्तरं जानन् अपि यदि न वदति, तदा भवतः शिरः सहस्रधा भिन्नं भवति'' इति उक्त्वा तूष्णीम् अभवत् ।

राजा त्रिविक्रमः एवं प्रत्युत्तरं दत्तवान्– ''यथा पिता न तथा पुत्रः । पिता तु अत्याशा-ग्रस्तः । कृष्णशर्मा यत् अस्ति तेन तृप्तः भवति स्म । एतच्च पित्रा सह तस्य सम्भाषणतः एव ज्ञायते । धनाशया एव यद्यपि तस्य पिता हतः। तथापि तस्मात् भीतः सन् कृष्णशर्मा गृहं न त्यक्तवान् । पितृसकाशात् सम्पादितायाः शक्तेः प्रयोगं परोपकारार्थम् एव कृष्णशर्मा करोति स्म । सद्यःकाले वैशालीनगरे तस्याः शक्तेःआवश्यकता न आसीत् । चोरेभ्यः भीतिः तु नास्ति एव, यतः तस्य धनार्जने अत्याशा न आसीत् एव । राजसम्मानं निराकृत्य गृहत्यागे कारणं तु अधिक धनार्जने विघ्नाः पुनः पुनः आगच्छेयुः इत्येव । पितृमरणेन एषः पाठः शिक्षितः'' इति ।

एवं राज्ञः मौनभङ्गे जाते, वेतालः शवेन सह अदृश्यः भूत्वा यथापूर्वं शाखायां लम्बमानः आसीत् ।



# वैद्यस्य त्वरा

वैद्यः कश्चित् पुत्र्याः विवाहविषये वार्तालापं कर्तुं पार्श्वग्रामं गतवान् । तत्र वैद्यस्य ग्रामीणः कश्चित् वैद्यं दृष्ट्वा उक्तवान् -- "अस्माकं ग्रामस्य धनिकः भूपेन्द्रः अतीव ज्वरेण पीडितः।"

श्रवणसमनन्तरम् एव वैद्यः यथेष्टं भाटकं दत्वा अश्वशकटम् आरुह्य स्वग्रामसमीपे अवतीर्य, अन्तर्मार्गे प्रस्थितवान् । मार्गे मध्ये नाविकाय अधिकधनं दत्वा जलेन पूर्णां नदीं समुत्तीर्णवान् ।

त्वरितगत्या गृहम् आगत्य औषधपेटिकां स्वीकृत्य भूपेन्द्रस्य गृहं गतवान् । ज्वरेण पीडितस्य भूपेन्द्रस्य औषदोपचारं कृत्वा, यथा आगतवान् तथा एव त्वरितगत्या पार्श्वग्रामं प्रत्यागतवान् ।

एतत्सर्वं दृष्ट्वा तद्ग्रामीणाः केचित् श्लाघमानाः– 'वैद्याचार्य ! भवादृशः एतस्मिन् काले दुर्लभः । रोगिणां विषये भवतः श्रद्धा गौरवं च अन्यादृशम् एव' इति उक्तवन्तः ।

वैद्यः शिरः कम्पयन् उक्तवान्– 'श्रद्धां गौरवं च एतत्काले कः आद्रियते? मम औषधं विना अपि भूपेन्द्रः रोगात् मुक्तः भविष्यति एव । इतःपूर्वं द्विवारं तथा जातम् । अतः एव शीघ्रं गत्वा औषधं दत्तवान् । 'मम औषधेन एव रोगात् मुक्तः अहम्' इति भूपेन्द्रः मन्यते । इदानीं तस्य समीपे धनं यथेष्टं प्रष्टुं शक्यते किल ?' इति उक्तवान् ।






# देवस्य परीक्षा

एकस्मिन् ग्रामे शिवदासनामकः महान् देशभक्तः आसीत्। सः निस्वार्थी परोपकारी च। अतः एव ग्रामं ग्रामं गत्वा जनानां कृते उपदेशं ददाति स्म। देवस्य महिमातिशयं सर्वेषां जनानां कृते बोधयति स्म।

एवम् एव सः एकवारं रामनगरनामकं ग्रामम् आगतवान्। तत्रस्थानाम् आस्तिकानां कृते भगवद्विषयकं विचारम् उपदिशन् सः एवम् उक्तवान्—'देवः सर्वप्राणिनाम् कृते अपि आहारं ददाति। अतः एव नवजातः शिशुः स्तन्यपानं करोति। पिपीलिका-सदृशानां जीविनां कृते अपि योग्यम् आहारं देवः दापयति। क्षुद्रजन्तून् अपि सः न विस्मरति। एकः अपि जन्तुः आहारं विना मृतः न भवति। देवः सर्वान् अपि रक्षति। दरिद्रस्य अपि अन्नं दापयति। एवं सर्वेषां प्राणिनां कृते यथाकथञ्चित् आहारं ददाति एव। अत्र संशयः नास्ति' इति।

एवम् एव उपन्यासः प्रचलन् आसीत्। जनाः सर्वे आनन्दतुन्दिलाः आसन्। तेषां मध्ये सुदर्शनः नाम एकः वितण्डवादी आसीत्। सः एतत् अङ्गीकर्तुं सिद्धः न आसीत्। सः मध्ये एव उत्थाय उक्तवान्—"स्वामिन्! भवतः वाक्यं विचित्रम् इव भाति। एतत् अहं न अङ्गीकरोमि। 'न खादामि अहम्' इति प्रतिज्ञाय एकः उपविशति चेत् देवः कथं खादयति? माता यथा बालकान् भोजयति, तथैव देवः आगत्य बलेन खादयति वा? एतत् अङ्गीकर्तुं न शक्यते" इति।

तदा देवभक्तः 'देवस्य तत् कष्टं कार्यं न। दुराग्रहिणः अपि कथं भोजनीयाः इति सः जानाति। भोजनं विना जीवितुं न त्यजति' इति उक्तवान्।

सुदर्शनः मनसि एव एतेन सह 'वादेन प्रयोजनं नास्ति। अतः अहं गृहे किमपि

पञ्चविंशति-वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।



न खादामि। तदा अस्य भक्तस्य देवः आगत्य खादयति वा इति पश्यामि' इति निश्चयं कृतवान्।

यदा सः गृहं गतवान् तदा पत्नी भोजनार्थं सर्वं सिद्धं कृत्वा आहूतवती– 'आगच्छतु, भोजनं सिद्धम् अस्ति' इति।

'मम बुभुक्षा एव नास्ति। अहं अद्य रात्रौ भोजनं न करोमि। मम कृते उपरोधं मा करोतु' इति उक्तवान् सुदर्शनः।

सा पुनः- 'अस्माकं गृहे एव फलितं कारवेल्लम् आसीत्। तेन अहं व्यञ्जनं कृतवती। भवते बहु रोचते किल? किञ्चित् वा खादतु' इति उक्तवती।

'मम कृते भोजनं न आवश्यकम्। बुभुक्षा नास्ति इति उक्तं किल? 'वृथा तृप्तस्य भोजनम्' इति न जानाति वा? गच्छतु' इति गर्जितवान्। सा गतवती। किन्तु बालकाः भोजनसमये बहु पीडां दत्तवन्तः। 'गृहे तिष्ठामि चेत् वारयितुं न शक्यते। अतः एव ग्रामात् बहिः गच्छामि' इति सः चिन्तितवान्। ग्रामतः आगत्य एकस्य वृक्षस्य अधः उपविष्टवान् च।

तस्मिन् ग्रामे एका, पिशाचग्रस्ता आसीत्। मान्त्रिकः आगत्य तस्मिन् दिने रात्रौ पिशाचस्य उच्चाटनं करोति स्म। सः बहूनि भक्ष्यभोज्यानि कारितवान्। 'एकस्मिन् घटे स्थापयित्वा, ग्रामात् बहिः स्थितस्य एकस्य वृक्षस्य अधः स्थापयित्वा आगच्छन्तु' इति गृहसदस्यान् उक्तवान्।

तदा तस्य गृहस्य परिचारकाः तानि भक्ष्याणि नीतवन्तः। सुदर्शनः यत्र आसीत् तत्रैव तानि भक्ष्यभोजनानि स्थापयित्वा आगतवन्तः।

सुदर्शनः तदा वस्तुतः बुभुक्षितः आसीत्। तस्मिन् समये एव भक्ष्याणां सुगन्धः नासिकां प्रविशति स्म। तस्य जिह्वातः लालारसः स्रवति स्म। 'अद्य देवस्य परीक्षां करोमि एव' इति चिन्तयित्वा सः बुभुक्षां बलेन निरुध्य उपविष्टवान्।

एवमेव रात्रिः अग्रे गच्छति स्म। तदा

तृतीयः यामः आसीत्। तस्मिन् समये तत्र केचन चोराः आगताः। ते ग्रामेषु चौर्यं कृत्वा धनादिकम् आनीतवन्तः आसन्। इदानीं 'सम्पादितस्य विभागः करणीयः' इति तत्र सम्मिलिताः च। तेषां नासिकाम् अपि भक्ष्यादीनां सुगन्धः प्रविष्टः। ते तत्रैव स्थितं भक्ष्यपूर्णं घटं दृष्टवन्तः। ते सर्वे आश्चर्यचकिताः।

'अरे! एतावत् भक्ष्यम् अत्र कथम् आगतम्?' इति केचन उक्तवन्तः।

'यथा कथं वा आगच्छतु! इदानीं बुभुक्षा बाधते। भोजनं तु सिद्धम् अस्ति! खादामः। अन्यत् सर्वं अनन्तरम् परिशीलयामः' इति अन्ये केचन उक्तवन्तः।

'रे! रे! त्वरा मास्तु! येन केनापि अस्मान् मारयित्वा धनं सर्वं स्वीकर्तुम्, अन्ने विषं मेलयित्वा स्थापितं स्यात्। तथा अस्ति चेत् सः अत्रैव भवति। सम्यक् अन्वेषणं कुर्वन्तु' इति अपरः उक्तवान्।

चोराः अन्वेषणं आरब्धवन्तः। समीपे एव वृक्षस्य अधः उपविष्टं सुदर्शनं दृष्टवन्तः। सर्वे तस्य समीपम् आगत्य 'रे! वराक! अस्मान् मारयितुं जालं प्रसार्य अत्र अन्धकारे उपविष्टवान् वा? भवान् एव खादतु तत् भक्ष्यम्' इति उक्तवन्तः।

'अहं किमपि भक्ष्यं न खादामि। मम व्रतम् अस्ति। अतः एव अत्र उपविष्टवान्।' इति सुदर्शनः उक्तवान्।

सुदर्शनस्य वचनं श्रुत्वा तेषां संशयः दृढः जातः। अतः ते 'भवान् किञ्चित् खादतु प्रथमम्' इति बहु आग्रहं कृतवन्तः। सुदर्शनं बहु ताडितवन्तः। तथापि सुदर्शनः भोजनं कर्तुं न सिद्धः। अन्ते ते बलात्कारेण सुदर्शनस्य मुखे भक्ष्यं स्थापितवन्तः।

'सुदर्शनः न मृतः' इति ज्ञात्वा ते सर्वम् अपि भुक्त्वा, ततः गतवन्तः। 'भक्तशिवदासेन यत् उक्तं तत् सत्यम् एव' इति चिन्तयन् सुदर्शनः गृहं गतवान्।





# स्वप्नफलम्

पुरा कोसलदेशे बिम्बसारनामकः राजा आसीत्। सः एकदा रात्रौ क्रमेण बहून् स्वप्नान् अनुभूतवान्। निद्रानन्तरम् अपि ते सर्वे अपि स्वप्नाः स्मृतिपथे सम्यक् आसन्। ते सर्वे अपि चित्रविचित्राः स्वप्नाः।

महाराजः ब्राह्मणान् आहूय सर्वान् स्वप्नान् कथयित्वा "एतेषां विचित्रस्वप्नानां कः अर्थः स्यात्? इति सम्यक् विचार्य वदन्तु" इति उक्तवान्।

ते ब्राह्मणाः सर्वे वञ्चकाः ते आसन्। एवं चिन्तितवन्तः:– 'महाराजतः धनम् अपहर्तुम् एषः एव समयः। यथेच्छं धनं प्राप्नुमः। यावत् शक्यते तावत् धनं सम्पादयामः।' इति निश्चित्य महाराजस्य समीपम् आगत्य– 'महाराज, अनेकान् ग्रन्थान् अवलोक्य वयं वदामः। भवता दृष्टाः सर्वे अपि स्वप्नाः अनिष्टकारकाः। तैः केवलं न भवतः कृते, भवतः वंशस्य, राज्यस्य प्रजानां कृते अपि महती हानिः भविष्यति' इति उक्तवन्तः।

महाराजः एतेन वाक्येन बहु भीतः। 'तर्हि एतान् अनिष्टान् निवारयितुं कः उपायः? परिहारः अस्ति वा? अथवा अनुभोक्तव्यम् एव वा?' इति सः पृष्टवान्। एतत् श्रुत्वा ब्राह्मणाः उक्तवन्तः- 'परिहारम् अपि दृष्ट्वा एव आगतवन्तः। निवारणोपायः एकः एव अस्ति। अस्माकं राज्ये यत्र यत्र चत्वारः मार्गाः मिलन्ति, तत्र सर्वत्र यज्ञाः करणीयाः। यज्ञानन्तरं ब्राह्मणानां कृते यथेष्टम् अन्नदानं धनदानं च भवेत्। तेन सर्वाः अपि पीडाः निवारिताः भविष्यन्ति। राज्यम् अपि नवचैतन्येन उल्लसति। अत्र धर्मस्य दानस्य च अत्यन्तं प्राधान्यम् अस्ति' इति।

'जातक कथा'

बिम्बसारः अपि अविचार्य एव ब्राह्मणानां वचनं विश्वस्य कोषाधिकारिणम् आहूय 'मया केचन दुःस्वप्नाः अनुभूताः। तेषां दुष्फलानां परिहारार्थं यत्र चत्वारः मार्गाः मिलन्ति, तत्र यज्ञाः आचरणीयाः। अन्नदानं धनदानं च करणीयम्। 'दानं तावत् समृद्धम् न आसीत्' इति एकः अपि यथा न वदेत् तथा व्यवस्था करणीया। एतद्विषये जागरूकाः भवन्तु' इति आज्ञापितवान्।

एतं विचारं राजमहिषी ज्ञातवती। सा महाराजस्य समीपं गत्वा 'एतत् किं क्रियते? अविचार्य एव यज्ञस्य आरम्भः मास्तु। एते ब्राह्मणाः सर्वे न सर्वज्ञाः। तेषां वचनेषु संशयः समुद्भवति। अन्यान् अपि विचारयतु। महाज्ञानी भगवान् बुद्धः जेतवने निवसति इति विस्मृतं वा? तत्र गत्वा तस्य भगवतः समीपे सर्वान् स्वप्नान् सविस्तारं वदतु। तेषां फलं किम् इति पृच्छतु। सः अपि यज्ञं कर्तुम् आदिशति चेत् तदा तथैव आचरामः' इति सूचनां दत्तवती।

बिम्बसारः अपि 'समीचीना सूचना एषा' इति चिन्तयित्वा स्वयम् एव जेतवनं गतवान्। तत्र भगवन्तं बुद्धं दृष्ट्वा नमस्कृत्य स्वकीयं गृहम् आगन्तुं सविनयं प्रार्थितवान्। भगवान् बुद्धः महाराजस्य इच्छानुसारम् एकस्मिन् दिने राजगृहं गत्वा भिक्षां स्वीकर्तुं निश्चितवान्।



निश्चिते दिने आगतवान्। तदा महाराजः भगवतः सन्निधाने एवं प्रार्थितवान्—'भगवन्! भवता अविदितं किमपि नास्ति। अहं कांश्चन दुःस्वप्नान् दृष्टवान्। तेषां फलानि किम् इति ज्ञातुम् इच्छामि' इति।

महाराजस्य मुग्धस्वभावं दृष्ट्वा भगवान् बुद्धः हसित्वा ''राजन्! स्वप्नान् विवृणोतु। फलं वक्ष्यामि।'' इति उक्तवान्।

'देव! एकस्मिन् स्वप्ने अहं वृषभचतुष्टयं दृष्टवान्। वृषभाः बहुक्रूराः आसन्। ते भीकरं गर्जनं कुर्वन्तः राजगृहस्य अन्तः प्रविष्टाः। 'ते परस्परं युद्धं कुर्युः, पश्यामः' इति जनाः मिलिताः। किन्तु ते वृषभाः कोलाहलम् अकृत्वा एव स्वकीयं मार्गम् अनुसृत्य



गतवन्तः । कुत्र इति अहं न जानामि । किमर्थं ते एवं गतवन्तः ? कस्मात् प्रदेशात् आगतवन्तः ? अस्य स्वप्नस्य कः अर्थः ?'' इति राजा पृष्टवान् ।

''राजन्, एषः स्वप्नः भवतः कृते वा, भवतः कुलस्य कृते वा न अन्वितः । आगमिनि काले नृपाः सर्वे दुष्कृतयः जनिष्यन्ते । मेघः आगत्य अपि वर्षणं विना निर्गच्छति । प्रजाः दुःखिताः भविष्यन्ति । एतादृशानि दिनानि भविष्यति यदा कदा वा आगमिष्यन्ति । तदर्थं भवान् विह्वलो मा भवतु'' इति सान्त्वनवचनानि उक्तवान् ।

''अन्यस्मिन् विचित्रे स्वप्ने, भूमौ अप्ररूढाः अपि वृक्षाः फलपुष्पभरिताः मया दृष्टाः । एवं कुत्रापि अस्ति वा ? किं वा अस्य रहस्यम् ?'' इति राजा पुनः पृष्टवान् ।

महाराजस्य वचनं श्रुत्वा भगवान् बुद्धः एवम् उक्तवान्--' अहं पूर्वम् एव उक्तवान् किल ? ते पापिनः राजानः आगामिनि काले बहून् अपराधान् कुर्वन्ति । बाल्यविवाहाः भविष्यन्ति । तद अप्राप्तवयस्काः बालिकाः अपि मातरः भविष्यन्ति । तत्र भवतः दोषः नास्ति । भवता किमपि कर्तुं न शक्यते'इति ।

'अपरस्मिन् स्वप्ने गावः वत्सानां स्तन्यं पातुं प्रवृत्ताः दृष्टाः । किम् अस्य स्वप्नस्य फलम् ? कृपया विवृणोतु भगवन् ।''

''अगामी कालः विपरीतः भविष्यति । वृद्धाः स्वकीयपरिपालनाय बालान् आश्रयन्ति । तानि दुर्दिनानि आगामिनि काले आगमिष्यन्ति इति अर्थः ।''

''चतुर्थे स्वप्ने कांश्चन कृषिकान् दृष्टवान् । ते स्वकीये क्षेत्रे बलिष्ठान् वृषभान् विहाय वत्सान् गृहीत्वा हलैः कर्षणं कुर्वाणाः आसन् । ते वत्साः वेदनया बहु क्रन्दनं कुर्वन्तः आसन् ।''

''मया पूर्वम् एव उक्तम् । ते दुष्टाः राजानः अन्याय्यं मार्गम् अनुसरन्ति । अधिकारे स्थितान् वृद्धान् चतुरान् च सचिवान् विहाय, अचरातुन् अनभिज्ञान् च युवकान् तस्मिन् स्थाने नियोजयन्ति इति तस्य स्वप्नस्य अर्थः ।''

''पञ्चमे स्वप्ने विलक्षणम् एकम् अश्वं दृष्टवान् । तस्य उभयतः मुखम् आसीत् । सः अश्वः

उभाभ्याम् मुखाभ्याम् आहारं स्वीकरोति स्म। अस्य घोरस्वप्नस्य कः वा अर्थः ?''

''भविष्यति काले नितान्तम् अन्याय्यं भविष्यति। न्यायाधिकारिणः निष्पक्षं न्यायनिर्णयं न कुर्वन्ति। उभयपक्षतः अपि उत्कोचं स्वीकुर्वन्ति, किन्तु न्यायनिर्णयं न कुर्वन्ति इति सः स्वप्नः सूचयति।''

''षष्टस्य स्वप्नस्य फलं विवृणोतु, एकः रज्जुं निर्मापयति स्म। सिद्धं रज्जुभागम् एका शृगाली चौर्येण खादन्ती आसीत्। किं वा अस्य रहस्यम् ?''

''भविष्यति काले अनिष्टानि प्रवर्धन्ते। समाजे पुरुषाः महता कष्टेन धनं सम्पादयन्ति। स्त्रियः अनुक्त्वा एव तस्य धनस्य व्ययं कुर्वन्ति। पुरुषैः एतत् ज्ञातुं नैव शक्यते इति तस्य स्वप्नस्य अर्थः।''

''सप्तमे स्वप्ने एकं विचित्रं दृष्टवान्। राजभवनस्य समीपे एकस्मिन् बृहति भाण्डे सम्पूर्णं जलं आसीत्। तस्य परितः अनेके रिक्ताः भाण्डाः आसन्। तत्र सर्वकुलजाः अपि आगत्य, तदा एव पूरिते भाण्डे जलं पुनः प्रपूर्य गतवत्यः। रिक्तेषु भाण्डेषु एका अपि जलं न पूरयति। एवं व्यर्थजलपूरणस्य किं प्रयोजनम्? कः अस्य स्वप्नस्य अर्थः ?''

''अग्रे अधर्माः एव प्रवर्धन्ते। प्रजाः सर्वाः आर्जितं धनं महाराजस्य कोषागारे संपूरयन्ति। अन्यत्र प्रजानां गृहाणि रिक्तानि एव भवन्ति।



प्रजाभिः बहु कष्टम् अनुभोक्तव्यम् इति तस्य स्वप्नस्य अर्थः।''

'अष्टमे स्वप्ने पात्रे क्वथमानं अन्नं दृष्टवान्। तत् अन्नं एकत्र पिण्डीभूतम् आसीत्। अन्यत्र अपक्वम् आसीत्। किम् अस्य स्वप्नस्य रहस्यम् ?'' इति राजा पृष्टवान्।

''भविष्यति दुष्टकाले कृषेः अवस्थां एषः स्वप्नः सूचयति। अस्मिन् काले भूपालकाः कृषौ श्रद्धां न कुर्वन्ति। अतः एव कुत्रचित् अतिवृष्टयः भविष्यन्ति। ओषधयः सर्वे नश्यन्ति। इति तात्पर्यम्।''

''देव ! नवमे स्वप्ने अत्यमूल्यानि मलयचन्दनानि विक्रीय धनं स्वीकुर्वाणाः केचन पुरुषाः मार्गे मया दृष्टाः। किम् अस्य स्वप्नस्य

फलम् ?"

"भविष्यति काले केचन दुष्टाः पवित्रं धर्मं बोधयित्वा जनैः तुच्छान् ऐहिकसुखान् प्रतिफलत्वेन स्वीकुर्वन्ति । ज्ञानकार्यस्य मानम् अपगच्छति इति तात्पर्यम् " इति भगवान् बुद्धः उक्तवान् ।

"दशमे स्वप्ने भारभूतम् अपि प्लवमानं पाषाणं दृष्टवान् । एकः राजहंसानां समूहः एकं काकम् अनुसृत्य गच्छति स्म । अजाः अपि व्याघ्रान् गृहीत्वा खादन्ति स्म । अजेभ्यः वृकाः अपि भीताः आसन् । एभिः स्वप्नैः अहं अतीव खिन्नः । एते अनिष्टकारकाः खलु ? किं कर्तव्यं मया इदानीम् ?"

"एते स्वप्नाः भवतः कालस्य वा कुलस्य वा नैव अन्विताः इति पूर्वम् एव उक्तम् । तेषां विषये भवान् चिन्तां मा करोतु । एते स्वप्नाः सर्वे भविष्यत्कालस्य सूचकाः । आगामिनि काले धर्माः नश्यन्ति । पापाः वर्धिष्यन्ते । अत एव सत्पुरुषाः अपि नीचान् अनुसरन्ति । सज्जनाः आप अधिकारिणाम् अनादरेण भवता दृष्टः पाषणः यथा जले उत्प्लुतः तथैव निर्गच्छन्ति । परमनीचाः एव उन्नतं स्थानं प्राप्नुवन्ति । तदा सज्जनाः राजहंससदृशाः अपि दुष्टान् अनुसरन्ति । दुष्टाः सज्जनान् पीडयन्ति । निर्मूलयन्ति च ।

एतावदेव न । सत्कार्याणि धार्मिककार्याणि वा कुत्रापि न प्रचलन्ति । प्रचलन्ति चेदपि तत्र बहवः विघ्नाः । सर्वत्र अपि स्वार्थसाधकाः एवः प्रबलाः भवन्ति । वणिजः, शासकाः, अधिकारिणः, कर्मकराः, सर्वेऽपि स्वार्थम् एव पश्यन्ति । एतेन च सर्वैः निर्लक्षितः समाजः दुर्बलः भवति इति अस्य स्वप्नस्य तात्पर्यम्" इति भगवान् बुद्धः उक्तवान् ।

बिम्बसारस्य सर्वे अपि सन्देहाः निवारिताः अभवन् । सः यज्ञस्य विचारं त्यक्तवान् । भगवते बुद्धाय भिक्षां दत्वा तम् आदरेण प्रेषितवान् । समीचीनां सूचनां दत्तवतीं पत्नीं बहुधा श्लाघितवान् ।





# टीपू सुलतानः

मैसूरुशासकः हैदर अली भारते प्रवर्धमानम् आंग्लशासनम् अङ्गीकर्तुं निराकृतवान् । एतन्निमित्तम् ईस्ट-इण्डिया कम्पनी-हैदर अली इत्येतयोः मध्ये शत्रुता तीव्रतां गता । युद्धम् अपि आरब्धम् । १७८२तमे वर्षे हैदर अली क्यान्सरव्याधिना दिवं गतः ।

हैदर अली महोदयस्य मरणानन्तरं तस्य धैर्यशाली पुत्रः टीपू सुल्तानः सेनानायकत्वं निरूढवान् । आंग्लेयैः सह युद्धम् अनुवर्तितवान् । टीपू सुल्तानस्य धैर्यं साहसं च दृष्ट्वा शत्रवः अपि चकिताः ।





धैर्यच्युता आंग्लसेना युद्धे पराजिता । कम्पनीसेनानायकः ब्रिगेडियर मेथ्यूस् टीपू सुल्तानस्य बन्धी जातः । १७८४तमे वर्षे कम्पनीसर्वकारेण टीपूसुल्तानेन सह सन्धिः अङ्गीकृतः ।




उभयोः मध्ये एतत्सन्धिनिमित्ता शान्तता अधिककालं न स्थिता। गवर्नर् जनरल् कार्नवालीस् महोदयः टीपूसुलतानं स्ववशम् आनेतुं समयं प्रतीक्षमाणः आसीत्। मैसूरु-उपरि आक्रमणार्थं सः त्रिवारं स्वसेनां प्रेषितवान्। अन्तिमे आक्रमणद्वये सः स्वयं सेनासञ्चालनं कृतवान्।

आंग्लसेनया श्रीरङ्गपट्टनं वशीकृतम्। १८१५ तमे संवत्सरे अङ्गीकृतस्य एकस्य सन्धेः अनुसारं टीपूसुलतानः राज्यस्य अधिकान् भूभागान् कम्पनीकृते समर्पितवान्। तथापि आंगलसर्वकारः न तृप्तः। टीपूसुलतानस्य पुत्रद्वयं न्यासरूपेण स्वस्य अधीने 'स्थापनीयम्' इति आंग्लसर्वकारेण निर्बन्धः कृतः।





अपमानकरम् एतं नियमं सोढुं टीपू सिद्धः न आसीत्। सः हैदराबाद् निजामेन सह सम्बन्धं स्थापयितुं प्रयत्नं कृतवान्। 'भवतः पुत्र्याः विवाहः मम पुत्रेण सह भवतु'' इति वार्तां हैदराबाद निजामं प्रति दूतद्वारा प्रेषितवान्।

किन्तु ततः पूर्वम् एव हैदराबाद-निजामः कम्पनीसर्वकारेण सह मैत्री-पूर्वकं सन्धिम् अङ्गीकृतवान् आसीत्। एतदनन्तरं टीपुसुलतानः आंग्ल-शासनविरुद्धं युद्धं कर्तुं साहाय्यं प्रार्थयमानः अरब-टर्कि-फ्रान्स-अफ़घानिस्थान-इत्यदिदेशानां कृते दूतान् प्रेषितवान् । किन्तु कुतः अपि साहाय्यं न लब्धम् ।






फ्रान्ससेना मारिषस् द्वीपे अस्ति इति कापि वार्ता श्रुता । एतदनुसारं टीपूसुलतनः फ्रान्सगवर्नर मलार्टिक् महोदयं साहाय्यं प्रार्थितवान् । किन्तु तत्र फ्रान्स् गवर्नरः टीपूविषये सद-भिप्रायं प्रकटयन् 'आंग्लविरुद्धं युद्धं कर्तुम् इच्छन् यः कोऽपि सैनिकः भारतं गत्वा टीपूसैन्यं प्रवेष्टुम् अर्हति' इति डिण्डमघोषं कारितवान् ।

नवीनतया आगतेन गवर्नर् जनरल् वेल्स्ली महोदयेन एषा वार्ता श्रुता । टीपूसुल्तानः युद्धार्थं सिद्धतां कुर्वन् अस्ति इति सः ज्ञातवान् । अतः १७९८ तमे संवत्सरे युद्धं घोषितम् । कम्पनीशासनेन सह निजामः महाराष्ट्रीयाः च मिलितवन्तः । एतेन टीपूसुल्तानस्य शत्रूणां बलम् अधिकं जातम् ।






श्रीरङ्गपट्टनस्य उपरि शत्रवः त्रिषु दिक्षु अपि एकवारम् एव आक्रमणं कृतवन्तः । कम्पनी सैन्यम् एव ३५ सहस्रसङ्ख्याकम् आसीत् । एतेन टीपूसुल्तानस्य विजयस्य अवकाशः सन्दिग्धः जातः ।

कम्पनीशासनेन टीपूसुलतानं प्रति वार्ता प्रेषिता—‘‘आंग्लशासनस्य अधीनता अङ्गीकृता चेत् वैभवपूर्णं जीवनं यापयितुं यावादावश्यकं तावत् धनं प्रतिवर्षं दीयते’’ इति । किन्तु टीपू एतं प्रस्तावं तिरस्कृतवान् । अन्तिमश्वासपर्यन्तं युद्धं कृतवान् ।





आंग्लशासनेन सह मिलतः बहून् भारतीयशासकान् दृष्ट्वा अपि अविचलः टीपू सुलतानः सधैर्यं कम्पनीशासनस्य विरोधं कृतवान् । महाराणा प्रतापः आजीवनं मोगल—विरोधं यथा कृतवान्, तद्वत् एव टीप अपि मृत्युपर्यन्तं आंग्लविरोधं कृतवान् । एवं सः इतिहासे अमरः जातः ।



# अति सर्वत्र वर्जयेत्

एकस्मिन् ग्रामे एका युवती आसीत्। तस्याः नाम अरुणा इति। विवाहिता सा पतिगृहम् आगतवती। तस्याः पतिः सदानन्दः ग्रामान्तरे वासं करोति स्म। तस्याः श्वश्रूः श्वशुरः च स्वकीयपुत्रस्य विषये एवम् उक्तवन्तः – "सदानन्दः सुशीलः। किन्तु शीघ्रकोपी। सावधानेन भवितव्यम्!" इति।

पत्तने सदानन्दस्य गृहं बृहत् आसीत्। तस्मिन् गृहे चत्वारः प्रकोष्ठाः आसन्। गृहस्य पश्चाद्भागे एकम् उपवनम् अपि आसीत्।

दशद्वादश दिनानि अतीतानि। सदानन्दः तदा तदा पत्न्याः समीपे वदति स्म। "सर्वे मां शीघ्रकोपी इति वदन्ति। विना कारणम् अहं कदापि कुपितः न भवामि। तत्रापि भवत्याः विषये मम कोपः एव न भवति" इति।

एवम् एव एकः सप्ताहः अतीतः। सदानन्दः पत्न्याः समीपम् आगत्य "भवत्याः साहाय्यार्थम् एकां कर्मकारीं नियोजयामि" इति उक्तवान्।

पत्युः वचनं श्रुत्वा अरुणा उक्तवती 'गृहे बहुकार्याणि न भवन्ति किल? अहम् एका एव कर्तुं शक्नोमि। कर्मकरी आगच्छति चेत्, मम कृते कार्यम् एव न भवति। अतः अहम् एव सर्वाणि कार्याणि करोमि। कर्मकरी मास्तु' इति। तेन वाक्येन सदानन्दः कुपितः अभवत्। सः 'तर्हि, अस्य गृहस्य कार्यं कर्तुम् एकः एव पर्याप्तः किल? अहं तावत् गृहस्य स्वामी। गृहीयाणां पालनं पोषणं च मम दायित्वम्। अहम् एव सर्वं करोमि। पश्यतु। अहं कथं कार्यं करोमि इति! माम् असमर्थः इति मा चिन्तयतु' इति उक्त्वा गृहस्य सम्मार्जनं, पात्र-

'भगिनी'



क्षालनं वस्त्रक्षालनं सर्वम् एकः एव कृत्वा कार्यालयं गतवान् ।

अन्यस्मिन् दिने सदानन्दः पत्नीं पृष्टवान्— "कथम् अस्ति अस्माकं गृहम् ? द्रष्टुं सुन्दरं अस्ति वा ?" इति । सा "सत्यम्, बहु समीचीनं गृहम् इदम्" इति उक्तवती ।

सदानन्दः तत् वचनं श्रुत्वा विना कारणं कुपितः अभवत् । "सत्यम्, गृहं समीचीनम् एव । तदर्थं कियत् भाटकम् इति भवती जानाति वा ? तदर्थं कियत् आर्जयामि इति जानाति वा ?" इति क्रोधेन गृहस्य पश्चात् भागं गत्वा तत्र बहूनि शाकबीजानि उप्त्वा जलसेचनं कर्तुम् आरब्धवान् । मध्ये साहाय्यं कर्तुम् अरुणा आगतवती । किन्तु सदानन्दः तां तर्जयित्वा प्रेषितवान् । सदानन्दस्य विचित्रवर्तनं दृष्ट्वा अरुणा आश्चर्यचकिता अभवत् । यदा सः कुपितः भवति तदा बहु उपयुक्तानि कार्याणि करोति स्म । 'तदा अहम् अपि साहाय्यं करोमि चेत् किं भवति ?' इति अरुणा मनसि एव चिन्तयति स्म ।

एकस्मिन् दिने अरुणा प्रतिवेशिन्या सह स्वकीयां परिस्थितिम् उक्तवती । सा हसित्वा 'भवती सत्यं हि भाग्यशालिनी । अहं देवं प्रार्थयामि— मम पत्युः कृते अपि पुनः पुनः एतादृशः कोपः आगच्छतु इति" इति उक्तवती ।

एवमेव कानिचन दिनानि अतीतानि । ग्रामे एकः साधुः आगतवान् । सदानन्दः तस्य समीपं गत्वा "मम पत्नी अत्यन्तं गुणवती । तथापि तदा तदा मां कोपयति । किं करोमि ? मम गृहम् आगत्य एकं दिनं स्थित्वा परिहारं वदतु ।" इति उक्त्वा सायं गृहं आनीतवान् ।

साधुः गृहम् आगतवान् । अरुणायाः वर्तनं सर्वं दृष्टवान् । अरुणा सुशीला एवं गुणवती इत्यपि च ज्ञातवान् । अनन्तरं स अरुणाम् आहूय सदानन्दस्य अग्रे एवं पृष्टवान् ।

"बाले ! पत्युः विषये किमपि असमाधानं अस्ति वा ?" इति ।

अरुणा शिरसा एव नास्ति इति उत्तरं सूचितवती ।

'पत्युः स्वभावे किमपि परिवर्तनम् इच्छति वा?

किं परिवर्तनम् अपेक्षितम् ? वदतु ।"

अरुणा पत्युः मुखं भीत्या दृष्टवती ।

"भयं मास्तु । सदानन्दः सुशीलः । भवती निर्भयेन वदतु" ।

"विना कारणं मम पत्युः कोपः आगच्छति । तस्य निवारणं भवति चेत् पर्याप्तम्"

"अस्तु । भवत्याः पत्युः कोपः अपगच्छति । तदर्थं भवत्या एकं व्रतम् आचरणीयम् । एक-मासपर्यन्तं प्रतिदिनम् अपि एकवारम् एव भोक्तव्यम् । एतत् शक्यते वा ?"

"अस्तु, अवश्यं करोमि" इति अरुणा अङ्गीकृतवती । अनन्तरं साधुः तस्याः कर्णे कमपि उपदेशं दत्तवान् ।

अनन्तरं साधुः सदानन्दं पृथक् आहूय- 'सदानन्द ! भवतः पत्नी भवन्तं बहु आदरेण उपचरति । तस्याः मनसि प्रीतिः अस्ति । सा भवतः कोपेन बहु दुःखम् अनुभवति । सा सदा भवतः सुखम् एव इच्छति' इति उक्तवान् ।

"अहमपि तस्याः सुखम् एव इच्छामि । अतः एव कोपस्य अभिनयं कृत्वा सर्वाणि कार्याणि अहमेव करोमि ।"

"तर्हि भवतः कोपेन भवत्कृते कष्टं भवतः पत्न्याः कृते सुखं च भवति किल ? तथापि सा भवतः कोपं वारयितुं प्रयत्नं करोति । एतादृशी गुणवती पत्नी अस्ति । भवान् खलु



भाग्यशाली !"

'अस्याः कारणेन साधोः अग्रे अहम् एव मन्दमतिः अभवम्' इति सदानन्दः पुनः कुपितः । साधोः गमनानन्तरं कोपाविष्टः सदानन्दः कूपतः जलं स्वीकृत्य गृहं सर्वं क्षालयित्वा शुद्धं कृतवान् ।

अरुणा किंकर्तव्यमूढा अभवत् । सा गृहात् बहिः गतवती । तद्दिने सदानन्दस्य विरामदिनम् । गृहकार्यं सर्वं परिसमाप्य अरुणायाः निरीक्षणे आसीत् । अरुणा सायङ्काले गृहम् आगतवती ।

"कुत्र गतवती ?" इति सदानन्दः पृष्टवान् । अरुणा उक्तवती- "प्रतिवेशिनीगृहे कार्यं कर्तुम् !"

"तत्र गत्वा कार्यं कर्तुं किं दारिद्रयम् आपतितम् ?"

"दारिद्रयम् किमपि नास्ति। ममापि कोपः आगतः। तदा कार्यं कर्तुं भवान् अवकाशं न ददाति। अतः अन्येषां गृहं गतवती।"

"भवती अन्यत्र गत्वा कार्यं करोति चेत् जनाः मां किं वा चिन्तयन्ति ?"

"भवतः योग्यतयाः हानिः न भवति। मम पत्युः स्वास्थ्यं सम्यक् नास्ति। अतः सः यावत् स्वस्थः न भवति तावत् पर्यन्तम् अन्यत्र कार्यं कर्तुं साधुना आदिष्टा अस्मि। अतः एव अहम् अन्यत्र कार्यं करोमि इति सर्वत्र वदामि।"

"यत्किमपि भवतु। भवतीअन्यत्र कार्यं मा करोतु। तत् मया सोढुं न शक्यते।"

"यावत् पर्यन्तं भवान् गृहे कार्यं करोति तावत् पर्यन्तम् अहम् अन्येषां गृहं गच्छामि।"

'अहं गृहे कार्यं करोमि चेत् भवत्याः का हानिः ?

"अहं परगृहं गच्छामि चेत् भवतः का हानिः? भवतः कोपः मम साहाय्यं करोति। मम कोपः अन्येषां कृते साहाय्यं करोति" इति।

अनन्तरं सदानन्दः वस्तुस्थितिं ज्ञातवान्– "अहं यथा तस्याः हितम् एव चिन्तयामि, तथा सा अपि मम हितम् एव चिन्तयति" इति।

"अरुणे ! मां क्षाम्यतु। इतःपरं अहं कदापि भवत्याः विषये कोपं न प्रदर्शयामि !" इति उक्तवान् सदानन्दः।

"हन्तः ! अद्य साधोः उपायः फलितः। तथापि अहं एकमासपर्यन्तम् एकवारम् एव भोजनं करोमि। साधुना उक्तं व्रतं सम्पूर्णं करिष्यामि।" इति अरुणा उक्तवती। तया सह सदानन्दः अपि उपवासव्रतम् आचरितवान्।

एकमासपर्यन्तं व्रताचरणेन सदानन्दस्य कोपः सम्पूर्णतया अपगतः। अनन्तरं तौ परस्परं कलहं त्यक्त्वा सुखेन जीवनं कृतवन्तौ।





# नांटक-व्यसनम्

एकः ग्रामः । तत्र गोविन्दनामकः युवकः वसति स्म । बाल्यतः एव गोविन्दस्य नाटकव्यसनम् । सः शालां न गतवान् एव । अत्र तत्र नाटकं, यक्षगानम्, इत्यादिकं पश्यन् दिनानि यापयति स्म । यदा गोविन्दः युवकः अभवत्, तदा सः ग्रामं त्यक्त्वा नगरम् आगतवान् । नगरे एकां नाटकमण्डलीं गत्वा तत्र अभिनयस्य अवकाशम् अपि प्राप्तवान् । तस्याः नाटकमण्डल्याः नाटकप्रदर्शनं दश दिनानन्तरं भविष्यति इति निश्चितम् आसीत् । तदर्थं पूर्वाभ्यासः प्रचलति स्म ।

नाटकस्य कथा एवं आसीत् । 'एकः युवकः स्वमात्रा सह कलहं कृत्वा गृहं परित्यज्य गच्छति । सा माता तम् एव स्मरन्ती व्याधिपीडिता भवति । तदा तस्याः सहोदरः तं युवकम् अन्विष्यन् आगच्छति । तं गृहं आगन्तुं प्रार्थयते । परन्तु युवकः न अङ्गीकरोति । अन्ते सा माता एव पुत्रं द्रष्टुम् आगच्छति । तदा तस्याः प्रीतिं ज्ञात्वा पुत्रः तया सह गृहं गच्छति ।' एतस्मिन् नाटके पुत्रस्य पात्रं गोविन्देन करणीयम् आसीत् ।

नाटकमण्डल्याः यजमानः राजारामः, युवकस्य मातुलस्य पात्रम् अभिनयति स्म । सः गोविन्दस्य वसतिम् आगत्य तत्रैव अभ्यासं कारयति स्म । समयाभावात् सः बहु विलम्बेन अभ्यासार्थं आगच्छति स्म । गोविन्दस्य गृहस्य पृष्ठतः किञ्चित् स्थलम् आसीत् । तदनन्तरं एकः बृहत् प्राकारः । प्राकारस्य अपरस्मिन् पार्श्वे कस्यचित् धनिकस्य भवनम् । स च प्राकारः बहु जीर्णः । तत्र मध्ये रन्ध्राणि च आसन् ।

तस्मिन् दिने नाटकस्य पूर्वाभ्यासः आरब्धः । राजारामः स्वकीयपात्रस्य सम्भाषणम् आरब्धवान्



'किं भोः ! एवम् आग्रहः न करणीयः । भवतः माता भवतः चिन्तया एव व्याधि-पीडिता अस्ति । आगच्छतु, गृहं गच्छामः' इति ।

'न भोः, मातुल ! अहं नैव आगच्छामि । माता माम् उक्तवती- 'भवतः मुखं न प्रदर्शयतु' इति । अहं तु तां न पश्यमि' इति उक्तवान् गोविन्दः ।

'तथा न वक्तव्यम् भोः ! सा तदा भवन्तं तथा तर्जितवती स्यात् । परन्तु इदानीम् सा पश्चात्तापम् अनुभवन्ती अस्ति । भवान् न आगच्छति चेत् सा न जीवेत्' इति पुनः राजारामः उक्तवान् ।

एवंक्रमेण नाटकस्य सम्भषणाभ्यासं कारयित्वा राजारामः 'सम्भाषणं कण्ठस्थी-करोतु' इति उक्त्वा गतवान् । गोविन्दः तथैव किञ्चित्कालपर्यन्तम् अभ्यासं कृत्वा अनन्तरं गृहं प्रवेष्टुं सिद्धः । तदा प्राकारस्य रन्ध्रतः हस्ततालशब्दः श्रुतः । गोविन्दः भयेन तत्रैव पश्यन् स्थितवान् ।

'भोः ! अत्र पश्यतु । भवन्तम् एव आह्वयामि । समीपम् आगच्छतु । कोऽपि पिशाचः आगतः इति चिन्तितवान् वा ? अहं मनुष्यः एव' इति कण्ठध्वनिः श्रुतः ।

इदानीं गोविन्दस्य किञ्चित् धैर्यम् आगतम् । सः रन्ध्रस्य समीपं गत्वा दृष्टवान् । प्राकारस्य तस्मिन् पार्श्वे वृद्धस्य श्मश्रुपूर्णं मुखं दृष्टम् । तत् मुखं गम्भीरम् आसीत् ।

वृद्धः गम्भीरस्वरेण उक्तवान्- 'भोः, कीदृशः युवकः भवान् ? भवतः माता मृत्युदशायाम् अस्ति इति मातुलः उक्तवान् । तथाऽपि भवान् किमर्थं न गच्छति ? एवं न करणीयम् । सा भवतः जन्मदात्री किल ? अतः प्रथमं गत्वा तां पश्यतु' इति ।

'एषः वृद्धः नाटकस्य सम्भाषणं यथार्थम् इति चिन्तितवान् अस्ति' इति गोविन्दः ज्ञातवान् । तथाऽपि सः उक्तवान्- 'यत्किमपि भवतु, अहं गृहं न गच्छामि । भोः तात ! मम गृहस्य परिस्तितिं भवान् किं जानाति ? यथाकथमपि अहं गृहं न गच्छामि । अहं न गच्छामि चेत् भवतः का हानिः ?' इति ।

वृद्धः किञ्चित्कालं चिन्तयित्वा उक्तवान्– 'भोः ! अहम् अपि बाल्ये एवम् एव कृतवान् । गृहं त्यक्त्वा दूरं गतवान् । मम माता मां सर्वदा स्मरति स्म । अन्ते यदा अहं गृहं प्राप्तवान् तदा सा मृता आसीत् । पश्यतु मम भवनं, धनं, सर्वम् अस्ति । तथाऽपि किं प्रयोजनम् ? अहं मातुः प्रीत्या वञ्चितः किल !' इति ।



'एवं सम्भाषमाणः एषः वृद्धः महान् धनिकः एव । यथाकथाञ्चित् एषः वञ्चनीयः । तद्द्वारा यथेष्टं धनं सम्पादनीयम्' इति गोविन्दः चिन्तितवान् । तदा तस्य मनसि एकः उपायः अपि स्फुरितः ।

अतीवचिन्तामग्नः इव सः उक्तवान्– 'अहं किं करोमि ? गृहे वयम् अतीव दरिद्राः । अतः धनार्जनं करणीयम् इत्येव अहं नगरम् आगतवान् । मम ग्रामः बहु दूरे अस्ति । गन्तुं महान् व्ययः अपि भवति । रिक्तहस्तेन गच्छामि चेत् मातुः कष्टम् अधिकम् एव भवति' इति ।

'एवं वा ? भवतः मातुलस्य समीपे धनम् अस्ति वा नास्ति वा इति अहं न जानामि । अतः किञ्चित् तिष्ठतु । मातुः येन सन्तोषः स्यात्, तावत् धनम् आनीय ददामि' इति उक्त्वा सः वृद्धः स्वगृहं गतवान् । पञ्चदशनिमेषाः अतीताः । गोविन्दः चिन्तयन् आसीत् यत् सः वृद्धः मनुष्यः वा पिशाचः वा इति । तदा वृद्धः पुनः तत्र आगतवान् । तस्य हस्ते एकः धनस्यूतः आसीत् । सः तं स्यूतं दत्वा उक्तवान्– 'भोः ! एतत् स्वीकरोतु । विलम्बं न करोतु । श्वः एव गच्छतु' इति ।

गोविन्दः तम् स्यूतं स्वीकृत्य गृहम् आगतवान् । स्यूतम् उद्घाट्य दीपस्य प्रकाशे पश्यति– तत्र दशसुवर्णनाण्यकानि सन्ति ! सः अत्यानन्देन तानि पुनः स्यूते स्थापयित्वा स्यूतं स्वपेटिकायां वस्त्राणाम् अधः स्थापितवान् ।



परेद्युः समीपस्थजनानां मुखतः गोविन्दः ज्ञातवान् यत् 'सः वृद्धः धनिकः उदारी परोपकारी च अस्ति । अन्येषां कष्टं सः द्रष्टुं न शक्नोति । अतः यथेष्टं दानधर्मादिकं करोति' इति ।

एतत् ज्ञात्वा गोविन्दस्य मनसि दुराशा उत्पन्ना। धनिकस्य हस्ततः इतोऽपि धनं प्राप्तव्यत् इति सः निश्चयं कृतवान्। तस्मिन् दिने अपि राजारामः आगतवान्। द्वौ अपि गृहस्य पृष्ठतः गत्वा अभ्यासस्य आरम्भं कृतवन्तौ ।

राजारामः नाटकस्य वाक्यं उक्तवान्— 'भोः ! भवतः मातुः परिस्थितिः बहु गम्भीरा अस्ति । सा भवतः मार्गम् एव प्रतीक्षमाणा अस्ति । भवान् अद्य वा गृहम् आगच्छतु । शीघ्रं गच्छावः । भवतः दर्शनेन सा तत्क्षणे एव स्वस्था भविष्यति' इति ।

'मातुल ! मया तु निश्चयः कृतः अस्ति- गृहं न आगच्छामि इति । अहं तु एतद्विषये दृढः एव । भवान् व्यर्थं प्रयत्नं न करोतु । गच्छतु' इति गोविन्दः उक्तवान् ।

'तथा न करणीयम् । भवता आगन्तव्यम् एव । अद्य न शक्यते चेत् मास्तु । अहं दिनत्रयानन्तरम् आगमिष्यामि । सिद्धः भवतु । इदानीं तु भवान् अस्वस्थः अस्ति इति भवतः मातरं सूचयामि' इति उक्त्वा राजारामः प्रस्थितवान् ।

अद्यतनसम्भाषणम् अपि धनिकः निश्चयेन श्रुतवान् स्यात् इति गोविन्दः चिन्तयित्वा तस्य प्रतीक्षायाम् एव स्थितवान् । तदा रन्ध्रस्य अन्यपार्श्वतः धनिकः पृष्टवान्—भोः ! गृहं गच्छतु इति मया धनं दत्तं किल ? भवान् अद्यापि किमर्थं न गतवान् ? वृथा किमर्थं सर्वान् पीडयति ?' इति ।

गोविन्दः सविनयम् उक्तवान्— 'ह्यः अहम् एकं विषयं वक्तुं विस्मृतवान् । ग्रामे मया पूर्वं बहु ऋणं कृतम् अस्ति । इदानीं ग्रामं गच्छामि चेत् तत् सर्वं प्रत्यर्पणीयं भवति । कथं प्रत्यर्पयामि ? मम समीपे तु तावत् धनं नास्ति' इति ।

'तत् तु सत्यम् एव। एषः विषयः ह्यः एव वक्तव्यः आसीत्। अस्तु, किञ्चित् तिष्ठतु, आगच्छामि' इति उक्त्वा धनिकः गृहं गत्वा पुनः स्यूतम् एकम् आनीतवान्।

स्यूतं दत्वा सः उक्तवान्– 'एतत् स्वीकृत्य ग्रामं गच्छतु। ऋणं प्रत्यर्पयतु' इति।

गोविन्दः गृहम् आगत्य पश्यति– स्यूते विंशतिसुवर्णनाण्यकानि सन्ति। सः तानि अपि पेटिकायां स्थापितवान्।

आहत्य इदानीं त्रिंशत् नाण्यकानि लब्धानि। तानि दृष्ट्वा तस्य मनसि पुनः दुराशा उत्पन्ना। धनिकं वञ्चयित्वा इतोऽपि नाण्यकानि सम्पादयामि' इति सः निश्चयं कृतवान्।

सायंकाले तत्र आगतः राजारामः उक्तवान्– ' भोः! गोविन्द! इदानीं नाटकं किञ्चित् परिवर्तितम् अस्ति। तत्र माता मृता भवति। पुत्रस्य पश्चात्तापः भवति– एवं परिवर्तनं कृतम् अस्ति। तदनुगुणं सम्भाषणं पाठयामि' इति।

अनन्तरम् तौ गृहस्य पृष्ठभागम् आगतवन्तौ। 'किं वदामि भोः! सर्वम् अपि समाप्तम्! भवतः माता अतीव ज्वरपीडिता आसीत्। तथापि सा भवतः दर्शनार्थं इति प्रस्थिता। मार्गमध्ये एव दिवङ्गता। तदा अपि सा भवन्तम् एव स्मरति स्म। येन भवता मातुः सेवार्थम् आगन्तव्यम्



आसीत्, तेन उत्तरक्रिया करणीया आपतिता' इति।

अनन्तरम् गोविन्देन वाक्यानि वक्तव्यानि आसन्। परन्तु तत्पूर्वम् एव प्राकारस्य रन्ध्रस्य अपरपार्श्वतः गम्भीरकण्ठध्वनिः श्रुतः- 'भोः! वराक! एवम् एव भवेत् इति मया चिन्तितम् आसीत्! तिष्ठतु, आगच्छामि' इति।

'अहो! कः एवं वदति? कोऽपि पिशाचः वा?' इति राजारामः भीत्या उक्तवान्।

भयेन सम्भ्रमेण च कम्पमानः गोविन्दः गृहं प्रविष्टवान्। वृद्धः धनिकः अपि तम् अनुसृत्य अन्तः आगतवान्। तेन सह

दण्डधारि मल्लद्वयम् अपि आगतम्।

धनिकः कोपेन गोविन्दम् उक्तवान्– 'वराक! ग्रामं गत्वा अस्वस्थां मातरं पश्यतु इति मया त्रिंशत्सुवर्णनाण्यकानि दत्तानि। परन्तु भवान् न गतवान् एव। मातुः मरणे भवान् एव कारणम्। दुष्ट! भवतः मुख-दर्शनम् अपि पापाय भवति। भवादृशाः अस्मिन् लोके न भवेयुः। अतः यत्र माता अस्ति तत्रैव गच्छतु भवान् अपि' इति उक्त्वा धनिकः स्वसेवकौ संज्ञया किमपि सूचितवान्।

सेवकौ गोविन्दस्य सर्वाणि वस्तूनि बहिः निष्कास्य अन्विष्टवन्तौ। तस्य पेटिकायां त्रिंशत्नाण्यकैः पूर्णः स्यूतः अपि लब्धः। धनिकः गोविन्दं तर्जयन्– 'रे, मातृद्रोहिन्! दयया भवन्तम् एवम् एव त्यजामि' इति उक्त्वा धनस्यूतं स्वीकृत्य ततः निर्गतः। सेवकौ अपि तम् अनुसृतवन्तौ।

अत्र किं संवृत्तम् इति राजारामः इदानीं ज्ञातवान्। कुपितः सः उक्तवान्– 'सः सरलहृदयी धनिकः भवतः नाटकसम्भाषणं श्रुत्वा सत्यम् इत्येव चिन्तितवान्। धनम् अपि दत्तवान् किल। परन्तु भवान् मां न उक्तवान् एव। कीदृशः स्वार्थी भवान्। दुराशस्य भवतः अस्माकं नाटके अभिनेतुम् अवकाशः नास्ति। भवान् इदानीम् एव इतः गच्छतु' इति।

गोविन्दस्य अतीव पश्चात्तापः अभवत्। 'अहं मम मातरम्, एतं दयालुधनिकं च वञ्चयित्वा महापराधं कृतवान्। मम वाणिज्यार्थम् धनस्य आवश्यकता भवति इति कृत्वा माता स्वकीयकङ्कणम् एव दत्तवती। अहं तु तत् स्वीकृत्य नगरम् आगत्य नाटकव्यसनेन कालं यापयन् अस्मि। अस्तु, अहम् इदानीं गृहं गच्छामि। तेन मातुः आनन्दः भविष्यति। अनन्तरं तस्याः आदेशानुसारम् एव जीवननिर्वहणं करोमि' इति निश्चितवान्। अनन्तरदिने एव गोविन्दः स्वग्रामं गतवान्।





# कृपणस्य दानम्

सीमापुरे प्रतापचन्द्रः नाम एकः भूस्वामी आसीत् । सः धनिकः चेदपि महा कृपणः । कृपणत्वेन एव तस्य नाम समीपग्रामेषु सर्वत्र प्रसिद्धम् आसीत् । यदा सः वृद्धः जातः तदा तस्य मनसि पापभीतिः उत्पन्ना। तथैव भगवतः सेवा करणीया इति विचारः अपि आगतः ।

एकदा एकः सन्यासी सीमापुरम् आगतः । प्रतापचन्द्रः तस्य दर्शनं कृतवान् । तत्र सः सन्यासिनं नमस्कृत्य पृष्टवान्—'महात्मन्! मरणानन्तरं स्वर्गः प्राप्तव्यः चेत् मया किं किं करणीयम् ?' इति ।

तदा सन्यासी उक्तवान्-'मनः पूर्वकं यथेष्टं दानं करोतु । तेन इष्टं सिध्यति' इति । प्रतापचन्द्रः एतत् अङ्गीकृतवान् ।

सन्यासिनं द्रष्टुम् आगतः कश्चित् ब्राह्मणः भूस्वामिनः वचनं श्रुतवान् आसीत् । अपरस्मिन् दिने ब्राह्मणः तस्य गृहं गतवान् । तस्मिन् समये एषः भूस्वामी सुखासने उपविष्टः आसीत् । सः कौशेयवस्त्राणि धृतवान्, कण्ठे सुवर्णहारः आसीत् । अङ्गुलीषु वज्रसहितानि अङ्गुलीयकानि प्रकाशन्ते ! एतत्सर्वं दृष्ट्वा ब्राह्मणः 'अद्य दानरूपेण अमूल्यं वस्तु किमपि लभ्यते' इति चिन्तितवान् ।

भूस्वामी ब्राह्मणं दृष्ट्वा आगमनकारणं पृष्टवान् । 'श्वः आगच्छतु' इत्यपि उक्तवान् ।

अपरस्मिन् दिने ब्राह्मणः पुनः भूस्वामिनः गृहम् आगतवान् । तत्र भूस्वामिनं दृष्ट्वा सः चकितः । यतः भूस्वामी इदानीं दरिद्रः इव सामान्यवस्त्राणि धृतवान् आसीत् । शरीरे कुत्रापि सुवर्णस्य नाम अपि नास्ति ।

सः हसन् उक्तवान्—'एकः उच्चः अपरः नीचः इति भेदभावः मह्यं सर्वथा न रोचते । अतः अहं सर्वं त्यक्त्वा सामान्य-नागरिक-जीवनं यापयितुम् इच्छामि । इदानीं भवान् अहं च

समानौ । अतः भवतः कृते किमपि दातव्यम् इति प्रश्नः एव न उद्भवति' इति ।

निर्धनः ब्राह्मणः विनयेन उक्तवान्–'वेष-परिवर्तनं कृतं चेत् सम्पत्तिः अन्यदीया भवति वा? सम्पत्तिः तु भवदीया एव । अतः भवान् अस्मत्तः उत्तमः । किञ्चित् वा दत्वा मां अनुगृह्णातु कृपया' इति ।

भूस्वामी द्विवारं शिरः कम्पयित्वा मौनम् आश्रितवान् । अन्ते 'श्वः आगच्छतु, पश्यामः' इति उक्त्वा प्रेषितवान् ।

अपरस्मिन् दिने पुनः अपि ब्राह्मणः आगतवान् । भूस्वामिनं दृष्ट्वा पूर्वापेक्षया अधिकं चकितः । यतः एषः भूस्वामी काषाय-वस्त्राणि धृतवान् अस्ति !

ब्राह्मणं दृष्ट्वा भूस्वामी उक्तवान्--'मया सन्यासः स्वीकृतः । इतःपरं सम्पत्तेः मम च कोऽपि सम्बन्धः नास्ति' इति ।

'तर्हि भवता समग्रसम्पत्तिः किं कृता?' इति ब्राह्मणः पृष्टवान् ।

'मया त्यक्ता सम्पत्तिः मत्पुत्रान् एव प्राप्नोति किल ?' इति उक्तवान् भूस्वामी ।

'तर्हि भवतः पुत्राणां एव समीप गत्वा 'किमपि ददातु' इति पृच्छामि' इति उक्तवान् ब्राह्मणः ।

भूस्वामी तस्य गमनं निषेधयन् उक्तवान्– 'मम सकाशात् प्राप्तायां सम्पत्तौ एका पैसा अपि तैः अन्येषां कृते न दीयते । तैः एवं प्रतिज्ञा कृता अस्ति । वचनपालकाः मम पुत्राः । अतः तत्र गमनेन अपि प्रयोजनं नास्ति' इति ।

दरिद्रः ब्राह्मणः दीर्घं निश्वसन् स्वगृहं गतवान् ।

इतःपरं कोऽपि याचकः मम समीपं न आगमिष्यति' इति भूस्वामी निश्चितवान् । अतः एव तद्दिने रात्रौ गाढनिद्रां प्राप्तवान् सः कृपणः भूस्वामी ।





# विष्णुकथा

यथा यथा कृष्णः वर्धितः तथा तस्य शत्रूणां सङ्ख्या अपि वर्धिता। तादृश-कृष्णविरोधिनां दुष्टराजानां प्रमुखौ शिशुपालः जरासन्धः च। पौण्ड्रकः करूशदेशस्य राजा। सः कृतक-हस्तान् निर्माप्य तेषु शङ्खं चक्रं च धृत्वा बृहतीं गदाम् अपि धृत्वा "अहमेव विष्णुः, अहमेव वासुदेवः" इति सर्वत्र उद्घोषयति स्म। साल्वः इति शिशुपालस्य भ्राता कश्चित् आसीत्। सः 'सौभकम्' इत्यस्मिन् विमाने द्वारकानगरस्य उपरि विहारं कुर्वन्, युद्धार्थम् अवकाशं प्रतीक्षते स्म। पूर्वदिशि नरकासुरः साटोपं विराजते स्म। दक्षिणदिशि विद्यमाने शोणपुरे बाणासुरः शासनं करोति स्म। बाणासुरः बलिचक्रवर्तिनः पुत्रः। साक्षात् शिवः एव तस्य राज्यस्य रक्षणं करोति स्म। तेन गर्वितः सः स्वराज्यात् बहिः अपि शासनं कर्तुं प्रयत्नं करोति स्म।

कालान्तकः, कालयवनस्य अनुजः। 'केनापि जीविना भवतः मरणं न भवति' इति कश्चन दैवज्ञः तम् उक्तवान् आसीत्। तेन वचनेन मदोन्मत्तः सः, म्लेच्छ-यवन-सैन्यसहितः सन् दारुणं रक्तपातं करोति स्म। विग्रह-शिल्पादीन् भञ्जयन् देशे सर्वत्र लुण्ठनं करोति स्म। कृष्णस्य मारणम् एव तस्य लक्ष्यम् आसीत्।

एवमेव सर्वत्र आक्रमणं कुर्वन् सः गान्धार-देशं प्राप्तवान्। तत्र एकं अमृतशिलानिर्मितं जगन्मोहकमोहिनीशिल्पम् आसीत्। तत् दृष्ट्वा कालान्तकः तस्य सौन्दर्येण व्यामुग्धः अभवत्। कृष्णः तत् शिल्पं विश्वकर्मद्वारा निर्माप्य तस्य

"कृष्णस्य विजयः".



अन्तः स्व-योगमायाग्निं प्रवेशितवान् आसीत् । परन्तु एतं विषयं कालान्तकः न जानाति स्म ।

कालन्तकः तत् मोहिनीशिल्पं नीत्वा स्व-अन्तःपुरे स्थापितवान् । तत् पश्यन् प्रतिदिनं सः चिन्तयति स्म यत् 'यदि एतस्य प्राणाः भवन्ति तर्हि कथं स्यात् ?' इति ।

एकदा रात्रिसमयः । सुप्तः कालान्तकः मुरलीगानस्य लयानुगुणं नूपुरशब्दं श्रुत्वा जागरितः । उत्थाय सः दृष्टवान् यत् तस्य शिल्पस्य स्थाने एका अद्भुतसुन्दरी नाट्यं कुर्वती अस्ति ! मोहावेशपीडितः कालान्तकः समीपं गत्वा तां सुन्दरीम् आलिङ्गितवान् । परन्तु तत्क्षणम् एव सा सुन्दरी पुनः शिल्परूपम् एव प्राप्तवती । शिल्पस्य हस्ताभ्यां बद्धः कालान्तकः तत्रैव दग्धः। शिल्पस्य हस्तद्वयम् अपि भग्नम् । केवलं हस्त-रहितं शिल्पम् अवशिष्टम् ।

तदनन्तरं कालान्तकस्य सेनया सह कृष्णः युद्धं कृतवान् । भीता सा सेना बहुदूरं धाविता । तस्मिन् एव समये तत्र विद्यमानः अग्निपर्वतः स्फोटितः, यस्य ज्वालाभिः यवनराज्यम् एव भस्मीभूतम् ।

एवं पश्चिमदिशि स्थितानां म्लेच्छानां यवनानां च विद्रोहः स्थगितः । परन्तु पूर्वदिशि विद्यमानस्य प्राग्जोतिषपुरस्य महाराजस्य नरकासुरस्य प्रजापीडनकार्यं तु तथैव प्रचलति स्म ।

यदा विष्णुः वराहावतारं धृतवान् आसीत् तदा तेन भूदेव्याम् उत्पन्नः पुत्रः एव नरकासुरः । सः प्राग्जोतिषपुरं स्व-राजधानीं कृत्वा शासनम् आरब्धवान् । असुरसेनाभिः सह देवलोकम् आक्रम्य युद्धं कृतवान् । युद्धे तेन एव जयः प्राप्तः । सः देवमातुः अदितेः कर्णकुण्डलद्वयं बलात्कारेण आनीतवान् । अनन्तरं सः ऋषीन् साधुजनान् च निर्दयं पीडयति स्म । सः षोडश-सहस्रकन्याः बद्ध्वा आनीय कारागृहे स्थापितवान् आसीत् ।

नरकासुरस्य दुराचारैः सन्तप्ताः देवताः मुनयः च कृष्णं शरणम् गतवन्तः । कृष्णः तेषाम् अभयदानं कृतवान् । नरकासुरस्य वधार्थं सः प्रस्थितः । तेन सह सत्यभामा अपि प्रस्थिता । नरकासुरेण वरं प्राप्तम् आसीत् यत् 'यदि स्व-

मात्रा भूदेव्या व्रणितः भवति, तर्हि एव तस्य मरणम्' इति । सत्यभामा तु भूदेव्याः अंशतः एव उत्पन्ना आसीत् ।

कृष्णः सत्यभामया सह गरुडवाहनेन प्राग्जोतिषपुरं प्राप्तवान् । असुरसेनायाः उपरि आक्रमणं कृत्वा बहून् असुरान् मारितवान् ।

अन्ते नरकासुरः मदगजम् आरुह्य युद्धार्थम् आगतवान् । तेन सह युद्धं कुर्वन् यदा कृष्णः श्रान्तः, तदा सत्यभामा घोरयुद्धं कर्तुम् आरब्धवती ।

युद्धे सा सर्वबलम् अपि उपयुज्य एकं बाणं प्रयुक्तवती । तेन बाणेन नरकासुरस्य वक्षस्थलं छिन्नम् । "अम्ब !" इति वदन् नरकासुरः भूमौ पतितवान् । पुनः उत्थाय सर्वसाहसेन गदां गृहीत्वा कृष्णं मारयितुं प्रयत्नं कृतवान् । तदा कृष्णः चक्रायुधेन तस्य शिरच्छेदनं कृतवान् । तत् च छिन्नं शिरः विष्णुस्तुतिं कृत्वा कृष्णं वरं प्रार्थयते यत् 'लोकस्य सर्वे अपि जनाः मां स्मरेयुः' इति ।

"तथाऽस्तु" इति कृष्णः वरं दत्तवान् । ततः आरभ्य नरकासुरस्य संहारदिने 'नरकचतुर्दशी' इति उत्सवस्य आचरणम् आरब्धम् । तदनन्तरदिने नरकपरिपालनस्य अन्त्यम् अभवत् इति कृत्वा दीपावली उत्सवस्य अपि आचरणम् आरब्धम् ।

भगदत्तः नरकासुरस्य पुत्रः । कृष्णः भगदत्तस्य अभिषेकं कृतवान् । अनन्तरं सः अदितेः कुण्डलद्वयं गृहित्वा सत्यभामया सह द्वारकाम् आगतवान् ।



एकस्मिन् दिने कृष्णः रुक्मिणीदेव्याः मन्दिरे आसीत् । तदा तत्र आगतः नारदः एकं पारिजातपुष्पं कृष्णस्य हस्ते दत्तवान् । कृष्णः तेन पुष्पेण रुक्मिण्याः केशालङ्कारं कृतवान् ।

एतं विषयं ज्ञात्वा सत्यभामा क्रुद्धा । तदा कृष्णः तां सान्त्वयन् उक्तवान्—'चिन्तां न करोतु । एकपारिजातपुष्पेण किम् ? पारिजातवृक्षम् एव आनीय भवत्याः मन्दिरे आरोपयामि' इति ।



अदितेः कुण्डलप्रत्यर्पणव्याजेन कृष्णः सत्यभामया सह, गरुडवाहनेन देवलोकं गतवान्। अदितिं दृष्ट्वा कुण्डलद्वयं समर्पितवान्। अनन्तरं नन्दनवनम् आगतवान्। तत्र स्थितं पारिजातवृक्षं दृष्ट्वा तत् उत्पाटय गरुडस्य उपरि स्थापितवान्। भूमिम् प्रति गन्तुं प्रस्थितः च।

एतां पारिजातापहरणवार्तां श्रुत्वा देवेन्द्रः युद्धार्थम् आगतवान्। सः कृष्णस्य उपरि वज्रायुधं प्रयुक्तवान्। तेन गरुडस्य पक्षः ताडितः। गरुडः तु वज्रायुधं अधः पातितवान्।

एवं देवेन्द्रस्य वर्गभङ्गः अभवत्। सः उक्तवान्– 'यावत् पर्यन्तं कृष्णः भूमौ तिष्ठति, तावत् पर्यन्तम् अपि पारिजातवृक्षः भूमौ तिष्ठतु' इति।

सत्यभामायाः अन्तःपुरस्य उद्यानं पारिजातपुष्पाणां सुगन्धेन पूरितम्।

श्रीकृष्णस्य पुत्राः न आसन्। अतः सः कैलासं गत्वा तपः आचरितवान्। शिवस्य अनुग्रहं प्राप्तवान्। तस्मिन् समये साल्वः पौण्ड्रकः च द्वारकाजनान् पीडयन् आसीत्। कृष्णः तयोः संहारं कृतवान्। यदा दन्तवक्त्रः मृतानाम् अन्तिमसंस्कारं कुर्वन् आसीत् तदा कृष्णः तस्य पुरतः गतवान्। दन्तवक्त्रः गदां गृहीत्वा कृष्णं मारयितुं उद्युक्तः। परन्तु कृष्णः तस्य एव संहारं कृतवान्। तदा तस्य देहे यः विजयस्य अंशः आसीत् सः कृष्णस्य देहे विलीनः अभवत्।

कृष्णस्य प्रद्युम्नादयः अनेके पुत्राः जाताः। प्रद्युम्नस्य कुमारः अनिरुद्धः। बाणासुरस्य पुत्री उषा स्वप्ने एतम् अनिरुद्धं दृष्टवती। तेन मोहिता च। तस्याः सखी चित्रलेखा 'शाम्बरि' विद्याप्रभावतः अनिरुद्धं उषायाः अन्तःपुरम् आनीतवती। अनन्तरं गान्धर्वविधिना उषा–अनिरुद्धयोः परिणयः अभवत्।

बाणासुरः स्वपुत्र्याः अन्तःपुरे स्थितम् अनिरुद्धं नागपाशेन बद्ध्वा कारागृहे स्थापितवान्। पुत्रस्य रक्षणार्थं कृष्णः बाणासुरेण

सह युद्धं कृतवान्। बाणासुरं रक्षयितुं शिवः कृष्णेन सह युद्धं कृतवान्। परन्तु शिवः पराजितः।

बाणासुरस्य सहस्त्रं हस्ताः आसन्। तेषु केवलं हस्तद्वयं त्यक्त्वा अन्यान् हस्तान् कृष्णः छेदितवान्। अनन्तरं बाणसुरः कृष्णं शरणम् आगतवान्। उषा–अनिरुद्धयोः विवाहः वैभवेन अभवत्।



एतेन उत्तरदेशीयेन राज्ञा सह अपि कृष्णस्य सम्बन्धः वर्धितः। अतः समग्रे देशे ऐक्यं सम्पादितम्।

कृष्णः धर्मात्मनां पाण्डवानां सहायकः आसीत्। सः स्व-भगिन्या सुभद्रया सह अर्जुनस्य विवाहं कृतवान्।

खाण्डववन-दहनसमये कृष्णार्जुनौ तत्र स्थितं राक्षसशिल्पिनं मयं रक्षितवन्तौ। तेन सन्तुष्टः मयः पाण्डवानां कृते अद्भुतं सभाभवनम् एकं निर्माप्य ददामि इति वचनं दत्तवान्। अग्निदेवः कृष्णस्य कृते सुदर्शनचक्रं, पाञ्चजन्यनामकं शङ्खं अर्जुनस्य कृते गाण्डीवनामकं धनुः, अक्षय तूणीरं, देवदत्तनामकं शङ्खं च दत्तवान्।

युधिष्ठिरः राजसूययागस्य शुभारम्भं कृतवान्। इदानीं जरासन्धस्य संहारसमयः सन्निहितः।

कृष्णः, भीमः, अर्जुनः च वेषान्तरं धृत्वा अतिथीनां रूपेण जरासन्धस्य गिरिव्रजनगरं प्रविष्टवन्तः।

तस्मिन् काले बकासुरः, दुर्योधनः, कीचकः भीमः, जरासन्धः एते समानशक्तिशालिनः आसन्। कृष्णः जानाति स्म यत् एतेन अन्यतमेन अन्येषां चतुर्णां वधः भवति' इति। भीमः पूर्वमेव बकासुरस्य वधं कृतवान् आसीत्। अतः भीमः एव जरासन्धस्य वधं कर्तुं समर्थः। इति कृष्णः चिन्तितवान्। अस्त्रेण शस्त्रेण वा तस्य मारणं न शक्यम् आसीत्। परन्तु तस्य शरीरस्य द्वेधा विदारणेन एव शक्यम् आसीत्।

कृष्णः जरासन्धम् उक्तवान्– "वयं भवतः अतिथयः। भवान् अस्मासु अन्यतमेन सह मल्लयुद्धं करोतु। तदेव अस्माकम् आतिथ्यम्" इति।



जरासन्धः उक्तवान्- "भोः कृष्ण ! भवान् पूर्वम् एव मया पराजितः सन्, प्रवर्षणगिरिं धावितवान् । अर्जुनः तु इतोऽपि दुर्बलः। भीमः एव मया सह युद्धं करोतु" इति ।

भीमजरासन्धयोः मध्ये महत् मल्लयुद्धं संवृत्तम्। घोरयुद्धे भीमः जरासन्धम् अधः पातितवान्। अनन्तरं कृष्णस्य संज्ञानुसारं जरासन्धस्य शरीरं द्वेधा विदारितवान्। तत् भागद्वयम् अपि दूरे क्षिप्तवान् । एवं जरासन्धस्य वधः अभवत् ।

युधिष्ठिरः राजसूययागं कृतवान्। तस्मिन् यागे भीष्मस्य सूचनानुसारं, कृष्णस्य अग्रपूजाताम्बूलं दत्तम् ।

तस्यां सभायाम् उपस्थितः शिशुपालः एतत् असहमानः परुषवचनैः कृष्णं निन्दितुम् आरब्धवान् । खड्गं गृहीत्वा कृष्णं पाण्डवान् च मारयितुं सः सिद्धः । शिशुपालस्य शतं निन्दनवाक्यानि अपि कृष्णः मौनं सोढवान् । परन्तु शिशुपालस्य मुखतः यदा अनन्तरवाक्यं निर्गतं-तदा कृष्णः तस्य उपरि सुदर्शनचक्रं प्रयुक्तवान् । शिशुपालस्य शिरच्छेदः अभवत् । तदा शिशुपालस्य शरीरे यः जयस्य अंशः आसीत् सः बहिः आगत्य कृष्णस्य शरीरे विलीनः अभवत् । एवं जयविजययोः तृतीयं जन्म समाप्तम् । तौ वैकुण्ठं गतवन्तौ ।

मयः पाण्डवानां कृते एकम् अद्भुतसभाभवनं निर्माप्य दत्तवान् आसीत् । तत् दृष्ट्वा दुर्योधनः आश्चर्यचकितः । तत् द्रष्टुं यदा गतवान्, तदा सः तत्रत्य–भ्रमजनक–रचनादिभिः अपमानितः । जलं स्थलम् इति भ्रान्तवान् ! स्थलं जलम् इति भ्रान्तवान् । तस्य भ्रान्तिं दृष्ट्वा द्रौपदी हसितवती । अनेन दुर्योधनः बहु व्याकुलः । शकुनिः तं समाश्वस्य उक्तवान्– "वयम् अपिमार्गान्तरेण पाण्डवानाम् अपमाननं कुर्मः" इति । अनन्तरं तस्य सूचनानुसारम् एव द्यूतप्रसङ्गः संवृत्तः ।

कुचेलः कृष्णस्य बाल्यमित्रम् । कृष्णः बलरामः कुचेलः च बाल्ये सान्दीपनिमहर्षेः गुरुकुले सहाध्यायिनः आसन् ।

कुचेलस्य बहुजनाः पुत्राः पुत्र्यः च । सः तु इदानीं बहुदरिद्रः आसीत् । एकदा तस्य

पत्नी तम् उक्तवती – "कृष्णस्य समीपं गत्वा साहाय्यं प्रार्थयतु" इति। 'अस्तु' इति कुचेलः अङ्गीकृतवान्। कृष्णस्य कृते दातुं पत्न्या दत्तं किञ्चित् पृथुकं स्वीकृत्य सः प्रस्थितवान्।

कुचेलस्य आगमनसमये कृष्णः द्वारकानगरस्य सौधाग्रे अष्टपत्नीभिः सेव्यमानः क्रीडन् आसीत्। कुचेलं दूरतः दृष्ट्वा सः उत्थाय पादाभ्याम् एव तस्य समीपं गतवान्। कुचेलं गाढम् आलिङ्गितवान्। तम् आनीय स्व-सिंहासने उपवेशितवान्।

कृष्णस्य अष्टपत्न्यः अपि कुचेलस्य सत्कारं कृतवत्यः। तासाम् उपचारेण, कृष्णस्य आदरेण च आनन्दितः कुचेलः आगमनकार्यम् एव विस्मृतवान्। परन्तु कृष्णः तस्य हस्ते विद्यमानं पृथुकस्य स्यूतं दृष्टवान्। सः तं स्यूतं स्वीकृत्य मुष्टिपरिमितं पृथुकं आनन्देन खादितवान्। अवशिष्टान् पृथुकान् पत्नीनां कृते दत्तवान्।

कृष्णस्य आतिथ्येन कुचेलः बहु सन्तुष्टः। सः कृष्णं किमपि साहाय्यं न पृष्टवान् एव। केवलं कृष्णस्य सद्गुणान् स्मरन् प्रतिनिवृत्तः। परन्तु इदानीं तस्य गृहम् एतावत् परिवर्तितम् आसीत् यत् सः एव स्वगृहं ज्ञातुं कष्टम् अनुभूतवान्।

तस्य गृहम् इदानीं रजतकनकादि–सकलैश्वर्ययुक्तं बृहत् भवनं इव परिवर्तितम्। तस्य पत्नी–पुत्रादयः सर्वे अपि नूतनवस्त्राणि आभरणानि च धृत्वा आनन्देन तस्य प्रतीक्षा कुर्वन्ति स्म। कुत्रापि दारिद्रयस्य नाम अपि न आसीत्।

अनन्तरं ते सर्वे अपि अनुदिनं कृष्णस्य कृपातिशयं स्मरन्तः बहुकालपर्यन्तं सुखेन जीवितवन्तः। दानधर्मादिभिः अन्येषाम् अपि साहाय्यं कृतवन्तः।





# विचित्रपक्षी

पर्शियादेशे शिराजनामकं नगरं प्रमुखं वाणिज्यकेन्द्रम् आसीत्। तथैव यात्रास्थलम् अपि आसीत्। अत्र सर्वदा विविध-प्रान्तीयाः जनाः गमनागमनं कुर्वन्ति स्म।

एतन्नगरम् आगन्तृभिः, एकेन अरण्यमार्गेण आगन्तव्यम् आसीत्। अरण्ये एकः विचित्रः पक्षी तदा तदा दृश्यते स्म। ये पक्षिणं दृष्टवन्तः ते वदन्ति स्म-- 'एतादृशं सुन्दरं पक्षिणं वयं अन्यत्र कुत्रापि न दृष्टवन्तः' इति। पक्षिणः मधुरगानं श्रुत्वा ते 'पक्षि-गानं गन्धर्वगानं अतिरिच्यते' इति वदन्ति स्म।

एतं विचित्रं पक्षिणं ग्रहीतुं बहवः बहुधा प्रयत्नं कृतवन्तः। एवं प्रयत्नं कृत-वत्सु न केवलं धनिकपुत्राः, अन्यान्यराज्यानां राजकुमाराः अपि प्रविष्टाः आसन्। किन्तु अत्र आश्चर्यस्य विषयः आसीत् यत्- एवं गत-वत्सु कोऽपि न प्रत्यागतवान्। ते सर्वे तत्रैव शिलामूर्तयः सञ्जाताः।

एतस्य विचित्रपक्षिणः वार्ता शिराज-नगरस्य राजकुमारी अपि श्रुतवती। तं पक्षि-णम् आत्मसात्कर्तुं तस्याः इच्छा जाता। सा पितरं संसूच्य एकं डिण्डिमघोषं कारितवती- 'यः तं विचित्रपक्षिणम् आनीय ददाति तं राजकुमारी परिणेष्यति' इति।

तस्मिन् नगरे धनिकपरिवारे उत्पन्नाः त्रयः युवकाः आसन्। ते बाल्यात् आरभ्य एकत्र क्रीडन्तः, इदानीं परस्परम् आत्मीयाः आसन्। तेषु एकः राजकुमारीं परिणेतुम् इच्छन्, पक्षिणं ग्रहीतुम् अरण्यं प्रस्थितः। यात्रिकान् पृच्छन् सः अन्ते पक्षिणः समीपं गतवान्।

तदा मध्याह्नः आसीत्। युवकः पक्षिणं ग्रहीतुं प्रवृत्तः। तदा पक्षिणा मधुरस्वरेण

''अरेबिया कथा''



गानम् आरब्धम्। पक्षिणः गानं श्रुत्वा युवकः तत्र मग्नः जातः। गानस्वरेण सह स्वकीयं स्वरम् अपि योजितवान्। किन्तु द्वयोः स्वरयोः मध्ये एकरूपता न आसीत्। युवकः तत्रैव शिलारूपतां प्राप्तवान्।

एकमासः अतीतः। स्वमित्रस्य अनागमनं दृष्ट्वा द्वितीयः पक्षिणं ग्रहीतुं गतवान्। राजकुमारीं परिणेतुं तस्य अपि प्रबला इच्छा आसीत्। किन्तु सः अपि न प्रतिनिवृत्तः।

पुनः एकमासानन्तरं तृतीयः—नाम्ना हानीफः—अरण्यं प्रस्थितः। हितचिन्तकाः 'मा गच्छतु' इति उक्तवन्तः। तदा हानीफः उक्तवान्— 'तं पक्षिणं ग्रहीतुं वा, राजकुमारीं परिणेतुं वा अहं न इच्छामि। अहं मित्राणाम् अन्वेषणार्थं गच्छन् अस्मि। यदि शक्यम्, तान् आनयामि। तदर्थं मदीयान् प्राणान् अर्पयितुम् अपि अहं सिद्धः' इति।

हानीफः अरण्ये सञ्चरन् एकत्र तं पक्षिणं दृष्टवान्। युवकं दृष्ट्वा पक्षी मधुरस्वरेण गातुं प्रारभत। हानीफः पक्षिणः सङ्गीतेन वशीकृतः। सङ्गीतम् अनुकर्तुं सः चिन्तितवान्। 'रसभङ्गः भवेत्' इति चिन्तयित्वा सः महता कष्टेन आत्मानं निगृहीतवान्। पक्षिणः समीपं गतवान्। पक्षिणा सङ्गीतं स्थगितम्। सधैर्यं हस्तं प्रसार्य हानीफः पक्षिणं, विना आयासं हस्ते गृहीतवान्।

हानीफः प्रीत्या पक्षिणः शिरः आमृशन् उक्तवान्— 'भवतः सौन्दर्यम् अनुपमम्। भवादृशः अन्यः पक्षी जगति नास्ति एव। भवान् मम मित्रयोः प्राणान् अनुग्रहीतुं शक्नोति किम्?' इति।

शिरः कम्पयता पक्षिणा उक्तम्— 'अवश्यं शक्नोमि। भवतः इच्छाम् इदानीम् एव पूरयामि। उड्डयनार्थं अनुमतिं ददातु। अहं शिलारूपेण परिवर्तितयोः भवतः मित्रयोः उपरि उड्डयनं करोमि' इति।

हानीफः पक्षिणं बन्धात् मुक्तं कृतवान्। शिलारूपेण स्थितयोः मित्रयोः उपरि पक्षिणा

द्विवारम् उड्डयनं कृतम्। तत्क्षणे एव उभौ अपि स्नेहितौ पूर्वरूपतां प्राप्तवन्तौ।

हानीफः स्वस्कन्धस्य उपरि आगत्य उपविष्टं पक्षिणं पुनः उक्तवान्–'भवतः सौन्दर्येण मुग्धाः केचन भवन्तं ग्रहीतुं आगत्य शिलारूपेण परिवर्तिताः सन्ति किल ? किमर्थं भवान् तान् अपि मानवान् न करोति ?' इति।

"एवं कर्तुं मम किं कष्टम् ?" इति वदन् पक्षी सर्वासां शिलामूर्तिनाम् उपरि द्विवारम् उड्डयनम् अकरोत्। अपरक्षणे एव सर्वे अपि मानवरूपेण प्रत्यक्षाः जाताः। सर्वे हानीफं प्रति कृतज्ञताम् उक्त्वा स्वग्रामं गतवन्तः।



अनन्तरं हानीफः पक्षिणम् उक्तवान्–'अहं भवतः उपकारं कदाऽपि न विस्मरामि। अहं भवन्तं निवेदयितुम् इच्छामि यत् कृपया भवान् मया सह नगरम् आगच्छतु' इति।

'निश्चयेन आगच्छामि' इति पक्षिणा उक्तं मञ्जुलस्वरेण।

हानीफः आत्मना सह आनीतं पञ्जरम् उद्घाटितवान्। तदा–'मम वामपादे स्थितम् अङ्गुलीयकं दृष्टवान् किल भवान् ? तत् स्वीकृत्य भवतः अङ्गुल्यां धारयतु। विपत्तिसमये तत् उपकरोति' इति उक्त्वा पक्षिणा अङ्गुलीयकं दत्तम्, पञ्जरं प्रविष्टं च।

हानीफः अङ्गुलीयकं स्वीकृत्य अङ्गुल्यां धृतवान्। अनन्तरं पञ्जरं स्वीकृत्य मित्राभ्यां सह नगरं प्रतिनिवृत्तः। मार्गे रात्रिः संवृत्ता। अतः त्रयः अपि एकस्य वृक्षस्य अधः शयनं कृतवन्तः। अर्धरात्रसमयः। हानीफः गाढनिद्रायां मग्नः। दुष्टयोः मित्रयोः मध्ये कश्चन रहस्यवार्तालापः जातः। अनन्तरं तौ हानीफस्य मुखे वस्त्रं संस्थाप्य, हस्तपादौ बद्धवन्तौ। समीपस्थे एकस्मिन् पुरातनकूपे तं क्षिप्तवन्तौ च।

अदृष्टवशात् कूपे जलस्य स्थाने कोमलाः सिकताः, शुष्कपत्राणि इत्यादयः आसन्। अतः हानीफः विशेषतया न व्रणितः। किन्तु पतनसमये भीत्या मूर्च्छां गतः।




किञ्चित्कालानन्तरं मूर्च्छातः जागरितः सः पार्श्वे उपविष्टं कृष्णवर्णीयं विशालशरीरम् भूतं दृष्टवान्।

एकक्षणं सः भीतः। तथापि भूतस्य विनयभावं स्मरन् धैर्येण पृष्टवान्– 'भवान् कः ?' इति।

'अहं भवतः अङ्गुलीयके निवसन् भूतः अस्मि। भवतः पतनसमये केनाऽपि शिला-खण्डेन अङ्गुलीयकं घृष्टम्। तदा अहं नियमानुसारं प्रत्यक्षः जातः। भवतः आज्ञायाः परिपालकः अहम्। इदानीं किं करणीयम् ? आज्ञापयतु' इति भूतः पृष्टवान्।

हानीफः उक्तवान्– 'प्रथमं भवान् मां कूपतः उन्नयतु। अनन्तरं किं करणीयम् इति पुनरपि सूचयामि' इति।

अनुक्षणम् एव भूतः तम् उन्नीय कूपतः बहिः आनीतवान्। तत्र हानीफः पश्यति- मित्रद्वयम् अपि नास्ति, पञ्जरम् अपि नास्ति! सः भूतम् आदिष्टवान्– 'शीघ्रं मां नगरं प्रापयतु' इति।

एतदनुसारं भूतः हानीफं नगरं प्रापित-वान्। तत्समये नगरे विचित्रः पक्षी प्राप्तः इति कृत्वा महान् उत्सवः प्रचलन् आसीत्। किन्तु राजभवनस्य पुरतः हानीफस्य मित्रयोः मध्ये विवादः प्रचलति स्म। उभौ अपि वदतः– 'मया एव पक्षी ग्रहीतः' इति। राजा तु वस्तुस्थितिं ज्ञातुम् असमर्थः आसीत्।

हानीफः महाराजस्य समीपं गत्वा उक्त-वान्– 'राजन्! वस्तुस्थितिं ज्ञातुं पक्षिणम् एव पृच्छतु। तेन, विना आयासं विवादः निर्णीतः भविष्यति' इति।

राजा खेदेन उक्तवान्– 'पक्षी किमपि न वदति। अतः एव एवं कष्टम् आगतम्' इति।

तदा हानीफः उक्तवान्– 'तर्हि पक्षिणं मम समीपम् आनयतु। अहं पक्षिणः मुखतः सत्यं वाचयामि' इति।

राजकुमार्याः अन्तःपुरे स्थितः पक्षी हानीफ-

समीपम् आनीतः। हानीकः पक्षिणं पृष्टवान्– "मित्र! सत्यं वदतु! अरण्ये भवन्तं कः गृहीतवान्" इति।

तदा पक्षिणा उक्तम्- "प्रथमं मां बन्धात् विमुक्तं करोतु। पञ्जरे बन्धी भूत्वा अहं कस्यापि प्रश्नस्य उत्तरं न वदामि" इति।

पक्षिणः विमोचनं कर्तुं राजकुमार्याः अनुमतिः पृष्टा। वस्तुतः येन पक्षी गृहीत्वा आनीतः, तेनैव सह राजकुमार्याः विवाहः भवेत् किल? अतः राजकुमारी सत्यं ज्ञातुम् इच्छन्ती, पक्षिणः विमोचनम् अङ्गीकृतवती।

पञ्जरस्य द्वारम् उद्घाटितम्। पक्षी हानीफस्य स्कन्धे उपविश्य द्विवारम् अवदत्– 'अरण्ये भवान् एव मां गृहीतवान्। भवान् एव मां गृहीतवान्' इति।

पक्षिणः वचनं श्रुत्वा दुष्टौ तौ स्नेहितौ पलायनं कर्तुम् आरब्धवन्तौ। किन्तु महाराजस्य भटाः तौ बन्धयित्वा आनीतवन्तः।

कुपितः राजा भटान् आदिष्टवान्– 'दुष्टयोः एतयोः शिरश्छेदनं कुर्वन्तु' इति।

तदा हानीफः राजानं प्रार्थितवान्– 'महाप्रभो! एतौ क्षाम्यतु भवान्। अरण्ये शिलारूपेण स्थितयोः एतयोः जीवदानम् अहं एव कारितवान्। अतः एतयोः मरणं द्रष्टुम् अहं न इच्छामि' इति।

हनीफस्य इष्टानुसारं राजा तयोः क्षमादानं कृतवान्।

सः विचित्रः पक्षी हानीफस्य स्कन्धतः उड्डीय अरण्यं गतवान्।

राजकुमार्या सह हानीफस्य विवाहः महता वैभवेन प्रवृत्तः।

एतदनन्तरं हानीफः राजकुमार्या सह तं विचित्रं पक्षिणं द्रष्टुं वर्षे एकवारम् अरण्यं गच्छति स्म। तत्र यदा पक्षी मञ्जुलस्वरेण गायति, तदा उभाभ्याम् अपि आत्मनः नियन्त्रणं क्रियते स्म। मनसा एव आनन्दः अनुभूयते स्म।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/-रूप्यकाणि ।

**विजितां शीर्षिकां अक्टोबर-८४ मासे प्रकटयिष्यामः ।**





❀उपरितनं चित्रद्वयं पश्यन्तु । तस्य युक्तां शीर्पिकां परस्पर-सम्बधि–वाक्यद्वयेन लिखित्वा अगस्ट् २० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः । स्पर्धायां विजेता ५०\– रूप्यकात्मकं पारितोषिकं प्राप्नोति । ❀ शीर्षिकाः समपत्रे (पोस्ट-कार्ड) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः । ❀अधोनिर्दिष्ट-सङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२ 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४**

**'जून्' मासस्य चित्रशीर्षिकास्पर्धा–परिणामः**

प्रथमचित्रम्– न अभूत् सत्कालहरणम् ।
द्वितीयचित्रम्– मा भूद् एकान्तजीवनम् ।
प्रेषकः– एम्. गोविन्द भट्टः, ३ ७१ टेन् हौसस्, कालम्मा स्ट्रीट्, बल्लारी ।

### भवन्तः जानन्ति वा ? ( उत्तराणि )

१. कालिदासः । २. होमर । ३. जान् मिल्टन् ।
४. कौटिल्यः । ५. सर् विन्स्टन् चर्चिल् ।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिन-शब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| उदरम्भरणम् | Eaking livlihood | श्वशुरः | Father-in-law |
| सञ्चयः | Savings | शाकबीजानि | Vegetable seeds |
| कपाटिका | Cupboard | प्रतिवेशिगृहम् | Neighbouring house |
| आपादमस्तकम् | Top to bottom | कृपणः | Miser |
| उपायनम् | Gift | अप्राप्तवयस्का | Under-aged |
| उत्प्लुत्य | Jumped | स्तन्यम् | Breast-milk |
| काहला | Bugle | उत्कोचः | Bribe |
| सङ्घट्टनम् | Collision | शृगाली | Vixen |
| झटिति | Quickly | क्वथते | Boils |
| शरावः | Lid | प्लवमानम् | Floating |
| अन्तर्मार्गः | Short cut | नूपुरशब्दः | Sound of anklets |
| तत्रस्थः | Being there | कुण्डलम् | Ear-ring |
| पिपीलिकासदृशः | Like an ant | उत्पाट्य | Having uprooted |
| वितण्डवादी | Arguing irreleventiy | विदारणम् | Tearing into two |
| दुराग्रहिणः | Impertinent | पृथुकः | Rice flakes |
| कारवेल्लम् | Bittergourd | अतिरिच्यते | Superior to |
| पूर्वाभ्यासः | Rehearsal | आत्मसात्कर्तुम् | To own |
| परेद्युः | Next day | आमृशन् | Keep on caressing |
| मल्लः | Wrestler | उड्डयनम् | Flying |
| श्वश्रूः | Mother-in-law | अङ्गुलीयकम् | Ring |

# दूरवाणी

| | |
|---|---|
| रवीन्द्रः- हरिः ओम् | Hellow |
| यशोदा- हरिः ओम्, कः तत्र ? | Hellow, who is speaking please |
| र- एषा षट्-पञ्च-पञ्च-शून्य-शून्य-चत्वारि वा? | Is it 655004 ? |
| य- आम्, कः अपेक्षितः ? | Yes, whom do you want ? |
| र- राजन्महोदयः अस्ति वा ? | Is Mr. Rajan there ? |
| य- सः नास्ति किल ! | Sorry, he is not here. |
| र- कुत्र गतवान् ? | Where has he gone ? |
| य- सः मैसूरुनगरं गतवान् । | He has gone to Mysore. |
| र- कदा आगमिष्यति इति ज्ञायते वा ? | May I know when he is returning ? |
| य- प्रायः दिनद्वयानन्तरम् आगच्छेत् । | After about 2 days, I suppose. |
| र- अस्तु नाम, मोहनः अस्ति वा ? | O.K. Is Mr. Mohan there ? |
| य- आम्, अस्ति ! | Yes. He is here. |
| र- कृपया तम् आह्वयति वा ? | Will you please call him ? |
| य- अस्तु, तिष्ठतु एकक्षणम्... । हरिः ओम्, क्षम्यताम् । सः मित्रगृहं गतवान् । | O.K. Please be on the line...Excuse me, he seems to have gone to a friend of his. |
| र- सः सायं षड्वादने गृहे भवेत् वा ? | Will he available in the evening ? |
| य- निश्चयेन वक्तुं न शक्यते । | I am not sure. |
| र- अस्तु, अहं सायं पुनः दूरवाणीं करोमि । | All right, I will ring up again in the evening. |
| य- कः दूरवाणीं कृतवान् इति वदामि ? | Who, shall I say, called him ? |
| र- मम नाम रवीन्द्रः । भवत्याः नाम ... ? | I am Rajendra. Your name please ? |
| य- अहं राजन्महोदयस्य भगिनी 'यशोदा' । | I am Yashoda, Mr. Rajan's sister. |
| र- अस्तु, स्थापयामि । | O.K. then. |

# साहसमये तथा हासमये आकाशे किम् उड्डयितुम् इच्छन्ति ?





**डाल्टन्**
**सुपर् कामिक्स्**
**प्रतिपक्षं भवतः कृते**
**तम् अवकाशं कल्पयति ।**

मूल्यं केवलं रू. २.५०-एकस्याः प्रतिकृतेः ।
सुलभतया प्राप्तुं शक्या एषा प्रथमा
कामिक्स् पत्रिका अद्वितीया एव ।

अस्याः ३६ वर्णमयपृष्ठानि भवन्तं वीरपुरुषैः
सह रहस्यं तथा रोमाञ्चकारिविश्वं नयन्ति ।

**सुपर मैन**
**तथा**







डाल्टन् पब्लिकेशन्स्
मद्रास् ६०० ०२६